# विजयिनी-काव्यम्



श्रीश्रीश्वर-विद्यालङ्कार-भट्टाचार्य्य-विरचितम् ।



विजयिनी-प्रतिमूर्त्तिः ।

HER LATE MAJESTY, QUEEN VICTORIA.

# विजयिनी-काव्यम्

श्रीश्रीश्वर-विद्यालङ्कार-भट्टाचार्य्य-

विरचितम्

# VIJAYINÍ-KÁVYAM

A

**SANSKRIT EPIC POEM**

IN TWELVE CANTOS

BY

SRISWAR VIDYALANKAR

AUTHOR OF VIKRAMABHARATAM, HEMODVAHA-KAVYAM, &c. &c.

EDITED WITH OCCASIONAL NOTES

BY

KOKILESWAR BHATTACHARYYA

VIDYARATNA M. A.

CALCUTTA :

1902.




TO

HIS HIGHNESS, LIEUTENANT-COLONEL

THE MAHARAJAH

SIR NRIPENDRA NARAYAN BHUP BAHADOOR

OF COOCH-BEHAR, G. C. I. E., C. B.

THIS WORK

IS BY KIND PERMISSION

RESPECTFULLY DEDICATED.



# विज्ञप्तिः ।



अद्य खलु श्रीश्रीमन्महाराजस्य विहारेश्वरस्य प्रसादानुग्रहा-भ्यामन्तर्हित-स्वविहारा धनत्रुटिशोथभारापि परिप्राप्तपदचारा, कवि-काव्यरूपेयं विजयिनी, दिदृक्षार्थं पर्षदि लोकानां विनिवेद्यते।

उपकृतजनसमाजः स एव महाराजः, प्रोज्ज्वलयन्निव विहारराज्यं, यशःपरिचितसर्व्वराज्यो नारायण इव नृपेन्द्र-नारायणः साम्प्रतं सर्व्वजनसन्तोषं वर्द्धयति ।

यस्य च तुङ्गीकृतवासभवनमहाशृङ्गम्, इन्दुरचितमिव सुचारु-वृत्तं, सर्व्वजनचित्तं दर्शनादेव विस्मापयते ।

ईश्वरप्रसूतवंशोऽयमित्यनेके व्याहरन्ति। राज्ञीस्नेहनेत्र-स्निग्धदृष्ट्यनुगतोऽयं, प्रतिदिनमेव हृद्यगन्धुरस्य स्वस्य राज्यस्य पुनः संस्कारं नष्टोद्धारमपि प्राप्तवांश्च। राज्ञाज्ञया यस्य पुनः स्वराज्येऽभिषेको, धनरत्नबाहुल्यैर्न केषां मनसि विस्मयं व्यातनुते स्म ?

यस्य च सर्व्वभावेनावराका दत्त-प्रियनाथाख्यादिप्राड्विवाकाः ; यस्य च पुनः राज्ञीमहासभाच्छायेव च महासभा। यस्य च राज्यसर्व्वाध्यक्षो, बुद्धा गुरुसमकक्षो राजकार्य्यदक्षो मधुरभाषी कालिकादासश्च। यश्च तं प्रामाण्या राज्ञ्याः प्राड्विवाका यत्नतः समानीय राजनिकाय्ये विहारराज्ये 'राज्यरक्षास्तम्भोऽयमस्माभिः प्रोथित' इति सभायां सर्व्वाग्रे नृत्यन्त इव सन्तः, सद्यः पाणिवाद्यमङ्गलं व्याचक्रुः।

यस्य च राज्ञः मृगमृगयादिष्वव्याहतमङ्गलवाहो निजोत्साहः। यस्य च प्रसादेन घण्टागृहस्तम्भावधि भक्ष्यभोज्यपण्यवीथिकारण्यं, सद्यःकृष्टमनोलोभमनेकशोभञ्च, द्यावापृथिव्योरन्तरालं, नक्तं नक्तं वाष्पस्य प्रदीपैर्ध्वान्तशान्तिमानीय दीपयतीत्यलमतिविस्तरेण।

यस्य च पुनरेकोऽन्यो मान्यश्च शिक्षकोऽस्य राज्ञो रहस्यमन्त्री च सतां मनोऽभिनन्दनः प्रियनाथाख्यो घोषनन्दनः कायस्थकुलमलयचन्दन इवापादमस्तकं सुविश्वासरत्नालङ्कारैश्च खचितः, सुजनत्वेन धात्रा रचितः, विजयिनीं प्रति [illegible]तित-स्नेह-दृष्टिः, सोऽत्राप्युल्लिख्यते। यश्च पुनर्विजयिन्यकारणबन्धुरवमत्य च निजक्लेशं, राजदाराश्चावहिष्कारी समुदायभारधारी प्रादुरासीत्, स च पुनर्धन्यवादार्हः कृतज्ञतां जानद्भिरस्माभिर्न कथं सबहुमानमुल्लिख्यते इत्यस्तु जयः सर्व्वत्रास्य प्रार्थनास्माकं चिरायेति।

अत्रैव च खलु ध्यायमान-वङ्गोत्तर-रंपुराख्यशाखानगरकल्याणः श्रीयुक्तो राजा "महिमरञ्जनः" काव्यमुखेऽस्मिन् संस्मर्य्यते। यस्य च प्रसादेन नानास्थानादनासादितादर्श-दर्शनोऽपि कविरयं काव्यस्य, विजयिन्याः सेतिहासानेककथाश्रवणप्रसङ्ग-.

र्ञ्मीत्सवानन्दं लब्धवान्। यश्च पुनः प्रदाय च बह्वर्थं, सोद्यानाङ्ग-प्रासादमण्डपं, सर्व्वग्रन्थमस्तकैर्विलिप्त-गुण-पुस्तकैस्तदक्षरैरपि च चमत्कारदर्शनैर्वन्यपुष्पारण्यमिवाद्यापि तदेवैतदभिरक्षय-तीति। अथ खलु तेष्वेव ग्रन्थशतरत्नेषु सागरेष्विव मज्जमनो-वृत्तिर्निरुद्वेगस्तिष्ठति। तत्रैव परिषद्यामण्डपे च, समधि-ष्ठितस्वजनामात्यैः सार्द्धं प्रत्यहमेवानन्देन यश्च खलु दिवस-स्यार्द्धमतिवाहयति।

तस्यैवं साधोः सुचरितस्य राज्यादिविषय-रूप-व्याकरण-महामहोपाध्यायत्वे प्रस्तुतेऽपि तत्रानासक्तेः प्रियैराजराजकथानु-रक्तेरहो राजभक्तिरहो अनुरक्तिश्च! तदयमात्मकुमारेण चिर-ञ्जीविना, कुमारकुमारीभ्यां कुमारस्य च, चिरञ्जीवतादिति।

अत्र पुनः सोऽप्यस्माकं यत्नाध्यक्षः श्रीमच्छशिभूषण-कृति-रत्न-भट्टाचार्य्यः काव्येऽस्मिन् कृतश्रमो धन्यवादमर्हतीति।

काशिकायाम्
ज्यैष्ठे, १३०८ साले

श्रीश्रीश्वर-शर्म्मणः।



# संशोधनी ।

| पृष्ठे | पङ्क्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| ७ | १६ | रच | रत्न |
| १४ | ४ | समुद्रावित | समुद्राविल |
| ५० | १२ | हृदय | हृदये |
| ५८ | ४ | भाव्या | भव्या |
| ७४ | १३ | भदं | भेदं |
| १४८ | २० | घिनि | घ्नि |
| १५० | २ | चन्द्राभागा | चन्द्रभागा |
| १६६ | ६ | पुरैका | किलैका |
| १९२ | ७ | ड्रूति | ह्निति |
| २१६ | ६ | क्षत | क्षतं |
| २५४ | ७ | संम्पर्श | संस्पर्श |

---



# TABLE OF CONTENTS.



## CANTO I.

### THE ENGLISH PEOPLE : THEIR CHARACTER.



## CANTO II.

### QUEEN VICTORIA : HER EARLY YEARS : ACCESSION, CORONATION AND REIGN.

---

## CANTO III.

### QUEEN'S MARRIAGE AND MARRIED LIFE.



---

## CANTO IV.

### QUEEN'S MARRIED LIFE, DIRECT ADMINISTRATION OF INDIA : DEATH OF PRINCE-CONSORT.

## CANTO V.

### SOUTH AFRICA : THE BOER-WAR.



## CANTO VI.

### DEATH OF THE QUEEN : FUNERAL PROCESSION.

## CANTO X.

### DESCRIPTION OF LONDON : ITS PRINCIPAL OBJECTS OF INTEREST.



## CANTO XI.

### DESCRIPTION OF ENGLAND AND LONDON : JESUS CHRIST.

---

## CANTO XII.

### BENEFITS OF BRITISH RULE : DESCRIPTION OF INDIA.





# कवेर्निवेदनम्

गीतेऽत्र मे वाद्यमुपेन्द्रवज्रा
प्रसिद्धनाम्ना च तथेन्द्रवज्रा ।
अनुग्रहेणाद्य सतां समाजः
शृणोत्विदं* भक्तिनिरुक्तिभाजः† ॥ १ ॥

नवोद्भवेयं कवितासमष्टि-
रुपेन्द्रवज्राखचिताङ्गयष्टिः ।
तथेन्द्रवज्राक्रतपादसृष्टि-
र्विभात्वमुष्यां सुनृणां सुदृष्टिः ॥ २ ॥

सतां सतामत्र‡ पवित्रराजि-
र्मयि प्रसन्नास्तु सुभक्तिभाजि ।
तस्याः प्रसादात् सफलास्तु चेष्टा
ममाद्य सङ्गीतवरे यथेष्टा ॥ ३ ॥

---

इदं—इन्द्रवज्रोपेन्द्रवज्रारूपवाद्यमित्यर्थः ।

भक्तिनिरुक्तिभाजः—एतत् पदं "मे" इत्यस्य विशेषणम् ।

अत्रे"ति पदम्—षष्ठ्यर्थे प्राग्दिशीयत्रल्प्रत्ययेन सिद्धम् । अत्र सताम्—पूज्यानामित्यर्थः ।

अस्मिन्ननुप्रासकृतप्रयत्ने
काव्ये समस्तांस्खलितशब्दरत्ने ।
दयाभि*रास्तां न सतोऽभ्युदासः
कृपचदृष्ट्या सममर्थ्यभासः ॥ ४ ॥

मैत्र्यप्रथा च विहितैव मिथोऽक्षराणां
दृश्यैकवारमियमस्तु सदुत्तमानाम् ।
पश्यन्तु तावदपि केवलशब्दसाम्या-
देतन्नवं मम बुधाः ! सफलास्तु काम्या† ॥ ५ ॥

अस्तु प्रसादकणिकाद्य नवा नवेऽस्मिन्
काव्ये सदीक्षणतयाकुलितस्य तस्मिन् ।
नानाप्रकारविनयस्य कवेरुदाराः
कामं स्फुरन्तु विदुषां करुणाम्बुधाराः ॥ ६ ॥

काव्ये नवे मे कुमुदप्रसूने
मनःप्रसादादिगुणैर्ननूने‡ ।
विकासनायास्य बुधप्रसादः
कृपाभिरास्तां भुवि चन्द्रपादः ॥ ७ ॥

---

* असकृद्याप्रार्थनाभिप्रायेण बहुवचनोक्तिर्द्रष्टव्या ।

† काम्या—कामनेत्यर्थः ।

‡ ननु—वितर्के । ऊने—विहीने इत्यर्थः ।

ये संस्कृतान्तःपुरमध्यकचे
चिरोषिताः सत्कविताकटाचे ।
करोति तेषां कविरस्य सेवा-
स्ते भारते सन्त्वथ लण्डने वा ॥ ८ ॥

ये संस्कृतोन्नया विधिवन्मृगाच्याः
करार्पणैर्जातकियाः सुदचाः ।
विद्याम्बुधौ लब्धनिधीन् बुधांस्तान्
निवेदयत्यस्य कविः सुग्राम्तान् ॥ ९ ॥

राज्ञी च राज्यस्य जनाधिपत्यं
विचित्रचर्य्या च तथैकमत्यम् ।
सर्व्वं घनीभूतमनुष्यजाले
काव्यादितो भातु परत्र काले ॥ १० ॥





# विजयिनीकाव्यम् ।




## प्रथमः सर्गः ।

चिरस्थिरं वाक्यपथादतीतं
गद्यैश्च पद्यैश्च तथापि गीतम् ।
ब्रह्मेदमानन्दरसानुविद्धं
प्रपद्यते* ज्ञानघनं प्रसिद्धम् ॥ १ ॥

श्रीश्रीश्वरः श्रीश्वरपादपद्म-
ममुक्तसंसारविमुक्तिसद्म† ।
प्रणम्य युञ्जानजनैकभाव्यं
मुदेदमाविष्कुरुते सुकाव्यम् ॥ २ ॥

---

* प्रपद्यते—प्रणम्यते मयेति शेषः। सदैकरूपत्वात् "स्थिरः"। "दृढ"मिति सर्व्वव्यापित्वाभिप्रायेण।

† अमुक्तेत्यादि—पादपद्मविशेषणम्। अमुक्तानां मुक्तिसद्मरूपमित्यर्थः।

अब्धेः प्रतीच्यामपरत्र पारे *
द्वीपो महानस्ति नृपाधिकारे † ।
अनेकपल्लीनगराधिवेशान्
भूमण्डनं ‡ संविदधत्प्रदेशान् ॥ ३ ॥

यः सिन्धुराजस्य वरं प्रतीरं
धत्ते च यः पार्थिवसैन्यवीरम् ।
इरूपवत्ता-ध्वनितस्य तस्य
समुद्ररुद्रादपि भीर्न यस्य § ॥ ४ ॥

पुनश्च यस्मिन् इउरूप-नाम्नि ¶
किं चित्रमेतन्न सलोकधाम्नि ।
शम्भोश्च मित्रस्य च पुण्यधाम
स्मरस्य तद्द्वेष-धरस्य ‖ नाम ॥ ५ ॥

* इदानीं इउरूप(Europe)-द्वीपवर्णनमारभ्यते (३—१०) ।

† नृपाधिकारे—न च आमेरिकादिवत् प्रजापरतन्त्रोऽयं द्वीप इति भावः ।

‡ मण्डनम्—अलङ्कारः । द्वीपस्य विधेयविशेषणमेतत् ।

§ इदानीमिउरूपशब्दस्य विभक्तावनुप्रासेन ("इरूप," "इउरूपवेति") अर्थीकृत्य श्लोकद्वयेन वर्णयति । इरूपेति—इः कन्दर्पः । तस्य द्वीपस्य कन्दर्परूपत्वेऽपि रुद्रान् भयमिति अर्थः ।

¶ इउरूपेति—इः कन्दर्पः, उः शिवः, अनयोरत्र सन्धिः । अत्रैवेदं सूच्यते यत् अनु-द्वयस्य शिवकामरूपस्य मिथो मैत्र्यमुपगम्य एकत्र संस्थानमिति ।

‖ तद्द्वेष-धरस्य—मदनारेः शिवस्य इत्यर्थः । नामेति सम्भावनायाम् ।

यः सर्व्वपाश्चात्यगणाधिवास-
श्चन्द्रायते यस्य यशःप्रकाशः ।
लण्डान्तदेशैश्च * नृसन्निवेशैः
सुशोभितो यश्च विशेषवेशैः ॥ ६ ॥
आत्मप्रतिष्ठासु न यस्य हेला
सम्भाव्यते येन समुद्रवेला ।
जलभ्रमिभ्रामितकृष्णसर्प-
स्तृणीकृतो येन समुद्रदर्पः ॥ ७ ॥
निरीतिभावा† दुपभातशान्ति-
र्यो राजराज्यैश्च गृहीतकान्तिः ।
अभ्रान्तविज्ञानकलादिभूयैः
प्रकाशते यश्च सयन्त्रसूर्य्यैः‡ ॥ ८ ॥
द्वीपोऽयमुच्चैर्धृतरत्नशोभः
केषां न तं द्रष्टुमुपैति लोभः ? ।
महान्ति रत्नानि च यत्र भान्ति
यश्चोज्ज्वलस्त्रीमुखरत्नकान्तिः ॥ ९ ॥

* लण्डान्तदेशैरिति—इंलण्ड स्काट्लण्डायर्लण्ड-हाइलण्डप्रभृतिभिः ।
† ईतिः षट्प्रकारा, सा चातिवृष्टिप्रभृतिका ।
‡ यन्त्रसूर्य्यैरिति दिनांशप्रकाशकः छायाग्राहको यन्त्रविशेषः ।

यस्मिंश्च नित्यं सुषमा*वलीभृत्
विराजते लण्डननामनीवृत्† ।
निःस्वादिकानामपि यद्दिदृक्षा
जागर्त्ति चित्तेषु विधाय भिक्षाः ॥ १० ॥
(अष्टाभिः कुलकम् ।)

तद्द्वीपमध्ये खलु ये वसन्त‡-
स्त एव चार्य्या यशसा लसन्तः ।
आर्य्या हि मूलानि बभूवुरेषां
नानास्थलस्थाः परतश्च येषाम् ॥ ११ ॥

ते § चैकमूलाः पुनरेकमन्त्रा-
स्तस्थुः पुरैकत्र न ते स्वतन्त्राः ।
उपाधितः केवलमेव भिन्ना
विदेशवासादभवन्नखिन्नाः ॥ १२ ॥

* सुषमा—परमशोभा ।

† नीवृत्—जनपदः ।

‡ इदानीम् इउरुपवासिनामेकमूलप्रभवत्वम् आर्य्यत्वञ्च निगद्यते । येषामेषां तद्द्वीपवासिनामुत्तरकाले नानास्थलस्था आर्य्या एव मूलानि बभूवुरित्यन्वयः ।

§ "ते"—इत्यनेन पूर्व्वश्लोकस्थ आर्य्यशब्दः परामृश्यते । आर्य्याणां नानादिग्गामित्वादिकमिदानीं वर्ण्यते (१२—२१) ।

तैरेव सप्तादिमितैः सुविज्ञैः
स्वराज्यरक्षासु दृढ़प्रतिज्ञैः ।
देशोपदेशोपगतैः सभार्य्यै-
र्महीयतेऽद्यापि महीयमार्य्यैः ॥ १३ ॥

ते चैकमूलाः शनकैस्तु काले
भ्रेमुः पुरा भारतवर्षमाले* ।
साङ्कोच्यमालोक्य बहुप्रकारं
प्रदुद्रुवुः सिन्धुनदस्य पारम् ॥ १४ ॥

परैकमूलाः खलु चैकभाषा
विदेशसम्प्रेक्षणसाभिलाषाः ।
सिन्धुस्थले ये किल हिन्दवस्ते
ख्यातास्तदन्येऽपि जने समस्ते ॥ १५ ॥

हीनं जनं दूषयतीति हीन्दुः
स एव वार्य्यो† भुवि जातिसिन्धुः ।
य एव चार्य्यस्तु स एव हीन्दु-
र्न भेदताया अपि भाति बिन्दुः ॥ १६ ॥

(युग्मकम् ।)

मुन्नतभूतलमित्यर्थः । गान्धारादिप्रदेशं प्राविशन्निति भावः ।

ब्दः पक्षान्तरं सूचयति । सिन्धुतीरभ्रमणकारिणः, हीनजनदूषका वा ये ते न्दवः—इति हिन्दुशब्दस्य श्लोकद्वयेन द्विप्रकारा व्युत्पत्तिरुक्ता । आर्य्याणाम् एकैव स्था भारतवर्षे निवसाभूदिति तात्पर्य्यार्थः ।

ललङ्घिरे केऽपि मनोज्ञमच्छं*
यदृच्छया तेऽथ समुद्रकच्छम् ।
दृष्ट्वा च तत्पारभुवं सदृक्षां
निन्युः कृतार्थाश्च ततो दिदृक्षाम् ॥ १७ ।

ते तस्य गत्वा परपारमेवं
श्रुतिक्रियावर्ज्जितयज्ञसेवम् ।
सप्ताश्व†दीप्ते खलु सप्तदेशे
तस्मिन्नथोषू रचिते निवेशे ॥ १८ ॥

नार्य्यस्य पाश्चात्यगणस्य भेदः
प्रतीच्यविज्ञै‡रनुमीयतेऽदः ।
तावेकमूलौ च तथैकजाती
चिह्नप्रमाणादिदमेव भाति§॥ १९ ॥

प्रचण्डघोणोऽरुणनेत्रकोणो
प्रायो मुखाब्जैः सितमिश्रशोणो ।
आर्य्यस्य चिह्नानि विभान्ति गात्रे
पाश्चात्यवृन्दे न च किं सुपात्रे ? ॥ २० ॥

---

* इदानीमार्य्याणाम् इतरूपादिदेशगमनमुल्लिख्यते ।

† सप्ताश्वः सूर्य्यः ।

‡ Professor Max Muller, Syce and other Philologists.

§ पाश्चात्याः आर्य्यजातिप्रभवा एवेति भावः ।

एवं पृथक्* चिरविराजमाना
रेजुर्विदेशे कृतसन्निधानाः।
आर्य्याः शनैः पल्लवितां प्रयाता-
स्ते सज्जनाश्चैकतया विभाताः ॥ २१ ॥

तेषाञ्च ये वीर्य्यजितप्रदेशाः
शनैर्लसद्दूर-पद-प्रवेशाः।
तदेकशाखाद्य† जयासनस्था
राज्येश्वरी नम्रसमस्तमस्ता ॥ २२ ॥

लण्डे‡ऽद्य सा सम्प्रति वीरजाति-
र्जयिष्णुरेका प्रबला च भाति।
इंराजनाम्नी भुवि मानतुङ्गा
शिल्पादिबुद्धाविव दर्भयुङ्गा§ ॥ २३ ॥

पृथक् रेजुरित्यन्वयः।

तदेकशाखेति—इयमेव इंराजजातिः। तेषामार्य्याणाम् एका शाखा इंलण्डदेशे निबद्धाभूदिति तात्पर्य्यार्थः। "It has been believed by *Savants* that Central Asia was the cradle of the human race; that here the ancestors of the Hindus and of the European races lived together and that it was from this common home that one branch went to the West and another came to India."

लण्ड:—इंलण्ड: (England). "सत्यभामा भामेतिवत् नृशब्दलोपेन नृसिंहः सिंहः" इति यथा शङ्कराचार्य्येण व्याख्यातं सहस्रनामभाष्ये, तथा अत्रापि इंशब्दलोपेन इंलण्डो लण्ड इति द्रष्टव्यम्। "प्रसिद्धशब्दानां तदेकदेशग्रहणेन समुदायग्रहणं भवति" इति च कलाप-पञ्जी।

शिल्पादिषु कुशाग्रीयबुद्धिसम्पन्ना इत्यर्थः।

यद्*व्यक्तय: सम्प्रति साष्टकोटय:
प्रदृश्यते सर्व्वजनैश्च यज्जय: ।
अनन्यसंस्पृष्ट इवास्ति यद्गुण:
कृपाम्बुधिर्यां भजते पुन: पुन: ॥ २४ ॥

उड्डीयते यज्जयवैजयन्ती
विपक्षगर्व्वं परितस्तुदन्ती ।
स्वजातिवेशैर्नयनाभिरामा
नवाम्बरा कान्तिमतीव वामा ॥ २५ ॥

या स्वर्गसंसर्गवताञ्च तुल्या
धनैर्जनैरायतनैरमूल्या ।
आर्य्यस्य सादृश्यमिता च सार्य्या
न "मङ्गलीया"† न परेति धार्य्या ॥ २६ ॥

नानापथादेत्य समुद्रपारात्
रणे रणे बद्धजय-ध्वजारात् ।
दातुं दधाना धनरत्नभाण्डं
निषेवते यां कमलाप्यकाण्डम् ॥ २७ ॥

* यदिति—सम्प्रति इंराजजातिर्वर्ण्यते (२४—३०) ।

† The Mongolians.

प्रशंसनीया च परैरजेया
पराक्रमाढ्या च फलानुमेया* ।
या चैकरूपैकमतैकवर्णा
यशोभिरापूरितसर्व्वकर्णा ॥ २८ ॥

या सद्गुणैर्विस्मितभारतार्य्या
जयत्यरीन् विक्रमतः सुकार्य्या ।
सदा मुदा चन्दनवारिधारां
तापे प्रजानां तनुते तुषाराम् ॥ २९ ॥

उड्डीयते यद्विजयादिकेतनं
सहस्रशोभं खलु यन्निकेतनम् ।
यदीयसाम्राज्यबलं समुज्ज्वलं
सदा समासादितलोकमङ्गलम् ॥ ३० ॥
(कुलकम् ।)

धन्या हि सा† यत्र समुद्भवास्ते
साहेबसङ्घा भुवने समस्ते ।
ख्याता नृणां ये प्रियतां दधाना
विभान्ति विस्फारितचारुमानाः ॥ ३१ ॥

---

फलानुमेया—अनुमेयफला (आहिताग्निवत्) ।

सा—इति यशोविश्रुतोक्ता इंग्लण्डजातिः । इदानीं तत्रातिपतयो वर्ण्यन्ते (२१—७२) ।

कम्पो भुवः क्वेति समस्तलोके
जिज्ञासया व्याकुलिते सतोके* ।
ये प्रेक्ष्य तत्स्थानमयानयाञ्चं
चक्रुर्जनं शान्तिपरीतगात्रम् ॥ ४० ॥

पुरैकदा घोरतरे समागते
दुरन्नरक्षस्यथ† भारते तते ।
पुरातनाभ्यासवशादहो सदा
नृचक्षुरिंराजमुखेऽपतत्तदा ॥ ४१ ॥

प्रजाः कृशाः शून्यवनेऽपि हा हृषाः
प्रपीड्यमाना बहवः क्षुधा तृषा ।
कुलालभाण्डं खलु मृन्मयञ्च यत्
प्रभूतमूल्यं सहसा बभूव तत् ॥ ४२ ॥

"बभौ च यः प्राक् विजयध्वजाजे-
र्जयाच्च दुर्भिक्षक्षतात्‡ समाजे ।
स एव साहेबगणोऽस्य तस्य
क्षयप्रदो भास्यति राक्षसस्य" ॥ ४३ ॥

* तोकम्—दुग्धपोष्यशिशुः ।

† दुरन्नरक्षसि—दुर्भिक्षराक्षसे । इदानीम् इंराजानां परहितचिकीर्षया दुर्भिक्ष-दमनादिकं वर्ण्यते (४१—५५) ।

‡ दुर्भिक्षक्षतात् भाजेः (युद्धस्य) जयात् यः (साहेबगणः) विजयध्वजो बभौ इत्यन्वयः ।

इत्येव भर्त्त्रा वचनं विचकृषुः
सम्पातयामासुरमुत्र चक्षुः।
स* चापि शत्रोर्बधबन्धनाय
धनं समादाय ययौ जयाय ॥ ४४ ॥

(युग्मकम्।)

पत्रेण विज्ञापितसर्व्वबन्धु-
जनाः स्वमध्याङ्गमिवाववन्धुः।
साहेबपुत्त्रा विलसत्तनुत्रा
बभुश्च तद्बन्धननीतसूत्राः ॥ ४५ ॥

आनीय धान्यादिधनं दिगन्तात्
यानेन पोतेन च ते समन्तात्।
बलाद्दुर्यत्† प्रथमेऽह्नि युद्धं
तेनैव दुर्भिक्षबलं हि रुद्धम् ॥ ४६ ॥

अहर्निशं धान्यधनस्य चेष्टया
प्रधावतां तत्त्वविदां यथेष्टया।
अमैन चाभूत्समये सुसुप्तिका
न भोजनैर्वापि शरीरगुप्तिका ॥ ४७ ॥

---

*स—साहेबगण इत्यर्थः। शत्रोः—दुर्भिक्षशत्रोरित्यर्थः। "विचकृषु"रिति 'कृष'देर्लिटि रूपम्।

†बलाद्दुरिति—ते यद्युद्धम् चक्रुः, तेनैव (युद्धेन) दुर्भिक्षबलं बद्धमित्यन्वयः।

दुर्भिक्षदस्योरथ वारणाय
पदे पदे विघ्नजनं निधाय ।
उपायचिन्तानिरताः समन्तात्
सदा जुघूर्णुर्विषमे तदन्तात्* ॥ ४८ ॥
क्व वा तदुष्णीषकथा क्व पादुका ?
बभूव तस्य प्रतिकर्त्तुमुत्सुकाः ।
मुदा भ्रमन्तो द्युमणेः खरे करे
निराकुला मध्यदिनेऽपि दुस्तरे ॥ ४९ ॥
ते रङ्गतो रङ्गपुरीय†भाषा
ग्राम्याः प्रयुज्यैव सभृत्यदासाः ।
प्रैक्षन्त तत्स्थानमभूतपूर्व्वं
दुर्भिक्षतः सम्प्रति यद्विदूर्ध्वम्‡ ॥ ५० ॥
आज्ञाप्य च ग्रामचरैतरेषां
स्त्रियं समस्तां श्लथरुक्षकेशाम्§ ।
दुर्भिक्षसंज्ञाय निशाचराय
दुरुक्तिदृष्ट्या परिभर्त्सनाय¶ ॥ ५१ ॥

(युग्मकम् ।)

* तदन्तादिति ल्यब्लोपे पञ्चमी ; तन्नाशमुद्दिश्येत्यर्थः ।
† Rungpur District.
‡ दूर्ध्वादित्यपरादित्यर्थेनेदमुक्तम् ।
§ तैलाभावादिति भावः ।
¶ सभृत्यदासास्ते, ग्राम्याः रङ्गपुरीयभाषाः प्रयुज्य दुर्भिक्षनिशाचराय दुरुक्त्या भर्त्सनार्थं ग्रामचरैतरेषाञ्च स्त्रियम् आज्ञाप्य, दुर्भिक्षतः यद्विदूर्ध्वं तत्स्थानं प्रैक्षन्त—इति श्लोकद्वयस्य अन्वयः । भृत्याः—Officers. दासाः—Orderlies.

उदूखलात्का मुषलं धुनानाः*
सम्मार्ज्जनीं काश्च रुषा दधानाः ।
द्रुतं प्रयातुं न च ताः प्रशक्ता-
स्तथाप्यधावन्नथ राजभक्ताः ॥ ५२ ॥

उदूखलं तास्विरमस्तधान्यं
दृष्ट्वा समन्तात्कृपणं वदान्यम् ।
कृत्वोपवासेन दिनावसानं
प्रारेभिरे दुर्व्वचनप्रदानम् ॥ ५३ ॥

असावनावृष्टिसुतो†ऽतिमात्र-
प्रारब्धचेष्टामधुनाद्रुगात्रः ।
धान्यव्रजैरेव पिपीलिकाभिः
सर्पोऽपतत्तैर्व्विनिकृत्तनाभिः‡ ॥ ५४ ॥

दुर्भिक्षरक्षः क्षतबाहुवक्षः
पपात भूयो न जनं ततक्ष ।
जितं बभौ नापि क्षतिं प्रयातं
कलौ भविष्यत्पुनरेव जातम् ॥ ५५ ॥

[illegible]रवासिनीनामुदूखलादीनि एव गृहकार्य्योपकरणानि । का:—काश्चन स्त्रिय इत्यर्थः ।
[illegible]वृष्टिसुतो दुर्भिक्षः । स सर्प इव विनष्ट इत्यर्थः ।
[illegible]समासान्तस्य अनित्यत्वात् नाच् "विनिकृत्तनाभः" (पाणिनिः ५।४।७५) ; गोधूलिवत् ।

मह्त्त्वमिंराजनृणामखर्व्व-
मथाद्भुतं विस्तृतसर्व्वपर्व्व * ।
निरीक्ष्य सद्विक्रमभ्यनेके
कामं वदन्तीदमिदं न के के ? ॥ ५६ ॥

"उल्लङ्घ्य भङ्गत्रयमेव सेतो-
र्लङ्कापुरीं प्राप्य कस्य हेतोः ।
पोतस्थलस्थास्त्र विभीषणं † तं
विज्ञापयिष्यन्त्यथ येऽर्थवन्तम् ॥ ५७ ॥

अदृष्ट-राजत्वमिमं वसन्तं
विभीषणं पिञ्जरमध्यगन्तम् ।
इष्टेषणे ‡ गोर§पदातयस्ते
ननु दर्शयिष्यन्ति विधृत्य हस्ते" ॥ ५८ ॥

कुर्व्वन्ति नार्चां समयस्य के ¶ वा ?
काले न केषां जठरस्य सेवा ? ।
कालं सदा मानयताञ्च तेषां
वृथा न कालस्य गतिर्हि येषाम् ॥ ५९ ॥

* पर्व्व—मङ्गलम्, उत्सवो वा ।

† अद्यापि लङ्कायां विभीषणो राजत्वं करोति, तस्य अमरत्वात् इति कथा अनुसन्धेय

‡ Station (Railway station).

§ "गोरा" नाम पदातयः ।

¶ के—इत्यादिना २१श्लोकोक्त-"साहेबसङ्घाः" लक्षिताः । (इत आरभ्य पुनश्च
श्लोकपर्य्यन्तं त एव साहेबसङ्घा वर्ण्यन्ते ।)

पद्भ्यामुपानद्द्युतिरञ्जिताभ्यां
गतिक्रियाविष्कृतकाकलीभ्याम्।
व्रजन्ति ये कञ्चुकिताः * सुधीरा
ह्रस्वास्तथा दीर्घतराश्च वीराः॥ ६० ॥

यदाज्ञया चैव जलं सदा चलं
नियुज्यते किङ्करवच्च सानलम्।
मरुत्ततिः कार्य्य-विधौ वशीकृता
तडिल्लता यैरपि पिञ्जरे धृता॥ ६१ ॥

हिताय वर्व्वर्त्ति विदेशसेवा
येषां पुनर्भारतरक्षणे वा।
चिकीर्षवो भारतमङ्गलानि
भ्रमन्ति तप्तानि मरुस्थलानि॥ ६२ ॥

कृषिप्रयोगानुपदेशयन्ति
तदुन्नतिभ्यश्च धनं त्यजन्ति।
शिल्पोपदेशांश्च तथा प्रजाभ्यः
कुर्व्वन्ति ये भूपतिदैवताश्च † ॥ ६३ ॥

कञ्चुकिताः—Having coats and pants on.

भूपतिदैवतेति—"अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्म्मितो नृपः" इत्याद्यनुशासनात् भारतीयानां भूपतयो देवस्थानीयाः। उपदेशयन्तीति "तत्करोति तदाचष्टे" इत्यनेन णिच्।

छात्रान् परीक्षाम्बुधितोऽवतीर्णान्
कुर्व्वन्ति ये कार्य्यधुराभ्युदीर्णान् ।
तान् शिक्षयन्तो यशसा धनानां
निर्निन्दनामाप्तिमुदग्रमानाम् ॥ ६४ ॥

तीर्थप्रदेशं प्रति यात्रिकाणां
स्वदां विशुद्धिं समलापमानाम् ।
कृत्वाशु दृष्टिं रचयन्ति शिष्टां,
गृह्णन्ति तेभ्यश्च शुभप्रतिष्ठाम् * ॥ ६५ ॥

नृणां प्रयाणेऽध्वचया निरर्गला
नला † ज्जलप्राप्तिखनिस्तथाऽमला ।
कृता च यैस्तत्त्ववहा शतह्रदा
द्रुतं हि या धावति शब्दसम्पदा ॥ ६६ ॥

धनार्ज्जनारम्भविधौ शिरालं
विद्यागृहं यैर्निरमाय्यबालम् ।
आरोग्यशाला च तथा विशाला
भ्रमन्ति यस्यां भिषजां हि माला: ॥ ६७ ॥

---

* दृष्टिं कृत्वा (तीर्थप्रदेशान् स्वयं दृष्ट्वा इत्यर्थः) स्वदां विशुद्धिं रचयन्तीत्यन्वयः । तेभ्यः—यात्रिकेभ्य इति यावत् ।

† नलम्—Water-pipe, tube.

येषां सदास्ते फलवान् प्रयत्न-
स्ततो जयः सिध्यति लब्धरत्नः ।
क्षपा जटालेऽपि च कार्य्यजाले
ये सत्यसन्धिस्तव एव काले ॥ ६८ ॥

ये भूतिमप्राप्तवयःक्रमाणां
हृत्वायतोऽनेकसुवर्णमानाम् ।
रक्षन्ति, काले पुनरेव तेभ्यः
समर्पयन्ते दयया नतेभ्यः * ॥ ६९ ॥

प्रायो लिपिज्ञा धनयत्नवन्तः
स्वकार्य्यनिर्बन्धपरा लसन्तः ।
आरभ्य सम्पादनकार्य्यकारि
वीर्य्यञ्च येषां सहजं नतारि ॥ ७० ॥

प्रचोर्गतीनामनुवीक्षणादौ
तथेक्षणे वायुगते रणादौ † ।
येषामनीकाधिपतेः प्रशंसा
न कैः श्रुताऽधोमुखवैरिवंशा ? ॥ ७१ ॥

* This śloka refers to the Courts of Wards established by the Government. भूतिम्—धनम् (Property of minors).
† रणादौ—युद्धारम्भे ।

स्वाधीनचर्य्यानुगतापि बाला
तथैव पाने मदहेतुहाला* ।
न यान् समुद्वेजयते, विशाला
गूढ़ाशया ये च तथोच्चभाला: ॥ ७२ ॥

प्रगृह्य भास्वन्मति-रत्नहारं
तरन्ति ये दुर्द्दिवसान्धकारम् ।
नित्यं कृतक्षेमसमष्टिसृष्टि-
र्विज्ञानभानोरपि येषु दृष्टि: ॥ ७३ ॥

इमा विराजन्त्युपयुक्तजातयो
न चैकदाभ्योऽथ भवीतिकाचय: ।
तथौ स्रुतानामनुकम्पय केवलं
दयालवो न ज्वलयन्ति चानलम् ॥ ७४ ॥

स्त्रियो†ऽपि यद्देशनिवासभाजा-
मग्रश्रिया भासितसत्समाजा: ।
शिक्षाभिरिंलण्ड‡भुवो वरिष्ठा
लसन्ति वेशेन च या विशिष्टा: ॥ ७५ ॥

---

* बाला—स्त्री । स्वाधीनाचारापि रमणी, तथा हाला च न यान् उद्वेजयते इत्यन्वय: ।
† इदानीम् इंराजरमणी वर्ण्यते (७५—८८) ।
‡ England.

याः कोमलाभ्यां सुषमां दधाना
दोर्वल्लरीभ्याञ्च विराजमानाः ।
आनन्दयन्तीव सुतान् पतींश्च
गृह्णन्ति तत्रत्यजनानतीश्च ॥ ७६ ॥

विभूषिताङ्ग्यो वरकञ्चुकैर्याः
प्रक्षीणमध्याः प्रतिपन्नधैर्य्याः ।
विद्या-घनिष्ठा विलसत्प्रतिष्ठाः
स्थिताश्च याः श्रेयसि, भर्त्तृनिष्ठाः ॥ ७७ ॥

आर्य्याभिरासां भरताङ्गनाभि-
रनेकसादृश्यमिहास्ति ताभिः ।
तासां कयापीशकृते * विवादे
वक्तुः पुरः साकृति † रङ्गगादे ॥ ७८ ॥

याः पद्मनालोपमचारुदोषा ‡
धराप्रचारा इव देवयोषाः ।
याः सुन्दरीणां गणनाग्रगण्याः
शुचिस्मिता लण्डनदेशकन्याः ॥ ७९ ॥

* ईशकृते—ईश्वरस्य स्वरूपनिरूपणविषयकतर्के इति भावः । इदं श्रुत्वा लिखितम् ।
† साकृतिः—साकारोऽयमिति यावत् ।
‡ दोषा बाहुः ।

भौमाङ्गनानां चरितैरुदारा-
स्तारा इवाकाशगतावतारा: ।
सौन्दर्य्यवीर्य्यैर्जयितां लभन्ते
शाखा यथा पल्लविता वसन्ते ॥ ८० ॥

हयेषु यासां परमास्ति शिक्षा
नवेषु पुष्पादिषु संदिदृक्षा ।
स्वल्पोपकारेष्वपि नित्यतुष्टा
लसन्ति याः सद्यशसा च पुष्टाः ॥ ८१ ॥

यास्तीक्ष्णबुद्धेरतिरेकवीर्य्यात् *
विपत्पयोधिं प्रतरन्ति धैर्य्यात् ।
गीतेषु वाद्येषु च शिक्षितानां
वरा विभान्तीह वराङ्गनानाम् ॥ ८२ ॥

स्वकेशबन्धेषु विशिष्टविद्या
यासां विभान्तीह जनस्य हृद्याः ।
नानाविधाकारविशेषवेशा
दिने दिने केषु † लसन्ति केशाः ॥ ८३ ॥

* सापेक्षत्वेऽपि यमकत्वात् समासः। † केषु — मौलिषु।

कृशं प्रतीत्या स्वयमेव यान्तं
गवाक्षमालाट्टगृहट्टजालम् ।
भुवि भ्रमन्तीव च राजहंसः
कण्ठस्वरैर्निर्ज्जितगीतवंश्यः ॥ ८४ ॥

प्रशंसिताश्चैव तथा श्रिया सिताः
सितासितालङ्कृतयः सुभाषिताः ।
समुल्लसद्‌यौवनरत्नमन्दिरा
वसन्ति भूमावतिरञ्जितेन्दिराः ॥ ८५ ॥

याः संस्कृताः सभ्यतमाश्च वामाः
सदा स्फुरत्कञ्चुलिकाभिरामाः ।
सभाप्रसङ्गेऽपि कथातरङ्गे
मिताक्षरा भान्ति तथान्यसङ्गे* ॥ ८६ ॥

आर्त्तान् निरीक्ष्यालसतां त्यजन्ति
तेषां हितायौषधमानयन्ति ।
पूये सरक्ते न घृणां वहन्ति
सदा तदारोग्यमुदा वसन्ति† ॥ ८७ ॥

(त्रयोदशभिः कुलकम् ।)

* अन्यसङ्गे—बान्धवादिभिः सह भ्रमणादिव्यवहारे । कञ्चुलिकाः—Gowns.

† कुमारसम्भवादौ निदर्शनमस्य बहुशो दृष्टम् ।

विभान्ति येषाञ्च * सदेहश्रियः
स्थलानि न स्युः किमु ते महाश्रियः ? ।
यदीयहस्त्याऽद्य धरा स्थिरायते
यथा, तथा भाविदिनेऽपि चायते † ॥ ८८ ॥

प्रजाप्रिया ये सरलेष्ववक्रा
येषां न चारातिमुखेषु शङ्का ।
स्वजातिछन्दोपकृतौ च रक्ता
नृपस्य कार्य्ये नृपतेश्च भक्ताः ॥ ८९ ॥

कृतापराधास्वपि ये प्रजासु
नित्यं प्रसीदन्ति नतासु तासु ।
विख्यातशीलाः खलु भारतानां ‡
श्रियं दधानाश्च महार्हमानाम् ॥ ९० ॥

विज्ञानवापीषु कृतावगाहै-
स्ततो विनश्यद्द्विषदग्निदाहैः ।
तैरेव यैर्वर्त्तितसद्विचारा
धरा स्थिरेयं धृतराज्यभारा ॥ ९१ ॥

* येषां—साहेबसत्तानामिति यावत् । पुनश्च इंरेजानां वर्णनं क्रियते (८८—९१) ।

† अद्य यथा धरा स्थिरायते, तथा भविष्यते भाविदिनेऽपि (भविष्यत्कालेऽपि) धरायाः स्थिरत्वसम्भावना—इति अन्वयरीतिः ।

‡ भारतानां—भारतवासिनामिति यावत् । जनपदे लुगिति तद्धितप्रत्ययस्य लोपः ।

सेनात्मशक्तिश्च तथा मनीषा
जये चयीति प्रभवत्यधीशा।
समुत्सुकास्तच गतालसाश्च
त इंलिशाः* कीर्त्तिकलावशाश्च ॥ ६२ ॥

घुम्वन्नब्दस्य† शब्दं ध्वनि-सकल-जयी
लज्जयन् वज्रनादं
व्यग्रानग्रे विलङ्घ्य द्रुतगतिरसकृत्
युद्ध-कामान-शब्दान्।
यद्राज्ये पर्व्वताग्रे द्रुमनदसहितं
वर्द्धयन् कूपकम्पं
वाष्पाख्यो द्राग्रथोऽयं ध्वनिभिरथ पथि
क्षिप्रमायाति याति ॥ ६३ ॥

इयमिति भुवि धन्या या पुरामग्रगण्या
मणिकिरणकलाभिश्चारुरूपावलाभिः।
प्रवहति बहुलक्ष्मीं लण्डनश्रीरभिख्यां‡
विजितसकलदेशा शिल्पिभिः प्राप्तवेशा ॥ ६४ ॥

इति श्रीश्रीश्वरीये विजयिनीकाव्ये इंराजचरितवर्णनो
नाम प्रथमः सर्गः।

* The English. † अब्दस्य—मेघस्य इत्यर्थः। ‡ अभिख्या—शोभम्।





# द्वितीयः सर्गः ।

तस्मिन् सदिंराजम्रगेन्द्रवंशे
पाश्चात्यभूपालकुलावतंसे ।
स्त्रीरत्नरूपा धृतधात्यत्ना
जज्ञे पुरैका बहुराज्यरत्ना ॥ १ ॥

नारीषु च श्रीषु कृताग्रपादा
प्रजोपकाराय लसत्-प्रसादा ।
नृसुन्दरी देवपरिग्रहार्हा
शिखण्डिनीवाजनि चारुवर्हा ॥ २ ॥

इंराजहन्दस्य कुलस्य सिन्धोः
कलाऽवलामूर्त्तिमयीवमिन्दोः ।
भिक्टोरिये*त्युन्नतधाम-धारा
येयं विधात्रा रचिताऽभ्युदारा ॥ ३ ॥

(विशेषकम् ।)

---

* Victoria.

विविन्दुवस्विन्दुनवेन्दुवर्षे *
सृष्टस्य दृष्टे शुभशान्तिहर्षे ।
चैत्राभिधे सा बकुदासदासी †
कुलेऽवनीन्द्रस्य ‡ वसन्तमासि ॥ ४ ॥

वंशे स्वराज्यारिभयादिनुल्के
प्रजावतारे च पुनः समुल्के ।
कन्यैव पुत्रव्यसनच्छिदेषा
बभौ परानन्दवहा सुवेशा ॥ ५ ॥

अत्यद्भुता प्रीतिवहा च यस्या
बाल्येऽपि लीला जयति स्म तस्याः ।
चतुर्थवर्षेऽपि लिपेरभिज्ञा §
सासीत्पुरा विस्मितसर्व्वविज्ञा ॥ ६ ॥

बाल्यं हि यासाद्य ¶ वयः, पयांसि
दृष्ट्वाभ्यधावच्च तथा वयांसि ।
कपोतपोतं परिधर्त्तुकामा
पदप्रचारं कुरुते स्म वामा ॥ ७ ॥

* १८१९ खृष्टाब्दे ।

† दासेन सह दासी ; द्वन्द्वकरणे तु दासीदासमित्येव स्यात् । सहयुक्तेऽप्रधाने तृतीया । दासः—Page.

‡ इन्द्रस्य—अवनीन्द्रस्येति भावः ।

§ "One of the Queen's earliest signatures, in capital letters and in pencil, written by her, *when 4 years old*, is in the British Museum."—*Holme's Queen Victoria.*

¶ बाल्यं वयः आसाद्येति अन्वयः ।

अगाद्वस्थाः खलु रिङ्गणीया
वार्य्यापि धात्रीभिरवारणीया ।
हर्म्याङ्गने जातु पतत्यदा सा
रोरुद्यमानापि सुचारुहासा * ॥ ८ ॥

विड़ालिकायाः परिगृह्य शावकं
मुदाभ्यधावत् गृहदीपपावकम् ।
प्रभञ्जनार्थं धृतवेत्रपेटिका,
ततो बभुर्व्यस्ततराश्च चेटिकाः † ॥ ९ ॥

सा दुग्धपोष्यां गतवत्यवस्थां
प्रागबन्धुभिः कल्पितसुव्यवस्थाम् ।
अपुरि बाला शनकैस्तदानी-
मिन्दोः कलेवोद्गता हिमानी ॥ १० ॥

श्रिया च बाला सुगुणाभिरामा
मग्नेव लावण्यसरःसु वामा ।
सादृश्यमस्याः क्व च नापि भेजे
सा भूचरी चन्द्रकलेव रेजे ॥ ११ ॥

* "The Queen's earliest recollection is that of *crawling on the floor* on an old yellow carpet."—*Holme's Queen Victoria.*

† "Victoria plays with my old bricks, and I see her *running* and *jumping* in the flower-garden."—*Ibid., P.* 31.

कुमारिका कान्तिमतीत्य सा शनै-
र्निरीक्षिता स्नेहभृतां मुदाननैः।
पदं दधौ यौवनसीमनि श्रिया *
सुरूपिणी चारुसखीजनप्रिया ॥ १२ ॥

शान्ते पितृव्येऽथ तदीयहस्तात्
प्रव्यक्तभावेन † तदेव पश्चात्।
अनन्तसाम्राज्यमनन्तदाय-
मिमां हि सौभाग्यवतीमियाय ॥ १३ ॥

निर्विन्दुवह्निन्दुमिते खमेके ‡
ससिन्धुवक्त्रौ शुभशान्तिसेके।
सा प्राप राज्यं नृमुदां प्रवाहे
खृष्टीयकेऽनेकशुभा शुभाहे ॥ १४ ॥

---

* On the 24th of May 1837, the Princess attained her majority.

† पितृव्य:—King William IV., who expired on Tuesday, the 20th June, 1837. ननु जन्मनैव ख्यातं, कथमिदानीमित्यत आह "प्रव्यक्तभावेनेति"। अन्यथा ख्यातं यत् तत् पूर्व्वमव्यक्तम्, इदानीन्तु तत् प्रव्यक्तमिति तात्पर्य्यार्थः।

‡ खमिते—संवत्सरे; खम्वो मासः, खमितं संवत्सरमित्यनुशासनात्; १८३७ खृष्टाब्दे इत्यर्थः।

वाद्यञ्च खाद्यञ्च जलं स्थलञ्च
प्रत्यग्जगामेव कलं बलञ्च * ।
आनन्दद्वन्द्वं † सहसातिमात्रं
भुवः पदादुच्छलितं नृणाचम् ॥ १५ ॥

तदा जयिन्या भुवने "जितं जितं"
पुराविरासीदिति गीतमुत्थितम् ।
विरेजिरे राजनमस्क्रियाः पराः
शिरोनतैरन्यनृणाञ्च सङ्कराः ‡ ॥ १६ ॥

सैन्यानि तस्मिन् नवसज्जितानि
प्रणेमुराराद्पशब्दितानि ।
स्वीकृत्य § कल्लोलरवेण सिन्धु-
र्ननर्त्त विस्फूर्ज्जितवारिविन्दुः ॥ १७ ॥

---

* कलं—यन्त्रादि ; अथवा 'कलिकलिः कामधेनुः' । बलं—सैन्यम् । इदानीमित आरभ्य विजयिन्याः सिंहासनाधिरोहणं (Coronation) राज्यप्राप्तिजनितानन्दोत्सवादिकं च वर्णयति (१५—२१) । † आनन्दद्वन्द्वमेव कर्तृपदम् ।

‡ The Queen was crowned in the Westminister Abbey. This śloka refers to the *Homege-ceremony* at her Coronation. The Archbishops, Bishops, Dukes and other Peers performed their *homage*, each *kneeling*, kissing her hand and touching the Crown ; the Queen sitting all the time in the *Chair of homage*. सङ्कराः—समूहा इत्यर्थः । अन्यनृणां शिरोनतैः (प्रणतिक्रियायाः) सङ्कराश्च विरेजिरे इत्यन्वयः । § तथा राज्यप्रणतिमिति शेषः ।

यदासनं सन्मितिभुक्तिमग्नं *
तदेव तत्पोदतलेऽभिलग्नम्।
शिरस्यथोद्दीप्तकिरीटतीरः
स्फुरत्प्रभूहीरकहेमकीरः † ॥ १८ ॥

मणिप्रवेको‡ज्ज्वलिताग्रदेशः
स्यमन्तकाख्यो मणिराज एषः।
जहार मौलौ सुषमां मदीनः
प्रभासमाक्रान्तकिरीटकोणः ॥ १९ ॥

(युग्मकम्।)

तदाद्भुतं ताण्डवनञ्च वाह्ने
नलाग्निशब्दस्य दिशो जगाह्ने।
सानन्दकोलाहलगीतवाद्यं
चकार नृश्रोत्रपुटस्य खाद्यम् § ॥ २० ॥

---

* सन्मितिः—सन्मार्ग, भुक्तिः—भोगः।

† This śloka refers to the *Crowning-ceremony* at her Coronation. "The Archbishop having offered a prayer to God placed the crown on the Queen's head. This was no sooner done than from every part rose a loud cry of 'God save the Queen.'" आसनं—St. Edward's Chair. तीरः—अग्रभागः, कीरः—पक्षी।

‡ प्रवेकः—प्रचयः, मुख्यं वा।

§ "At this moment, the trumpets sounded, the drums beat, and salutes were fired from the Park and Tower guns." नलशब्दः कामानादिपरः।

प्रत्नो विनष्टः किमिदम्प्रकारः
कर्णान्तिके यद्बक्कवाद्यघारः ।
स भारतेऽपि ध्वनिरागमिष्य-
न्मध्येऽम्बुराशिर्यदि नाभविष्यत् * ॥ २१ ॥

प्रवृत्तिरासीत् कृतभूप्रदक्षिणा
जनेन यस्यां मिलितं पताकिना ।
त्वरा च सारस्य शतद्रुदारथं
समुद्गमद्भारतवर्षभूपथम् † ॥ २२ ॥

अशोभि सैन्येन ततः पदातिना
रणस्य वेशेन नलास्त्रधारिणा ।
रराज मध्येऽपि तथाऽबलाबलं ‡
तुरङ्गयानाक्रमणेन चञ्चलम् ॥ २३ ॥

* क्रियातिपत्तौ लृङ् ।

† समुद्गमद्भारतवर्षभूपथमिति पदं शतद्रुदारथस्य विशेषणम् । प्रवृत्तिः भारतजनानाम् परं भूप्रदक्षिणं कृतवतीति स्पष्टार्थः ।

‡ This śloka refers to the grand *Coronation-procession* outside the Abbey. अबलाबलं—स्त्रीसैन्यम् ।

तुरङ्गयानां चतुरङ्गवाहिनी
चकार हर्षेण जयप्रवाहिणी।
अवाहना मल्लगणाश्च पङ्क्तिशं
ललङ्घिरे* द्वादशहस्तभूविलम् ॥ २४ ॥
प्रसादयन्ती हृदयं, जगज्जनं
प्रवृत्ति†रेषा नयति स्म वन्दनम्।
जयध्वनिः सङ्गत-तत्कुतूहलं
प्रकम्पयामास निनाद्य तत्स्थलम् ॥ २५ ॥
इयं‡ श्रियः क्षेत्रमिवाचिरञ्जनी
दृढं निबद्धाच नृनेत्रखञ्जनी।
वियोगतोऽभूदिति कश्चित्प्रिया
निशम्य भर्त्तुर्निगड़े कृतक्रिया§ ॥ २६ ॥
शुभाशुभालोकनलोकपञ्जिका
तथैव भूभारतराज्यरञ्जिका।
निपीय तद्राज्यकथां नृणां मुखे
न वर्त्तितुं शेकुररातयः सुखे ॥ २७ ॥

* This śloka also refers to the *Procession* outside. वर्णातिरेकादिति शेषः।
† प्रवृत्तिः—राज्यप्राप्तिवार्त्ता।
‡ इयं—विजयिनी इति यावत्।
§ वियोगासहतया काचित् प्रियवरं बबन्धेति भावः।

दिवः श्रियो व्यञ्जनया समागमे
तदा समाजे च नृणां मनोरमे ।
सुदर्पणश्री रविबिम्बपाततः
प्रपश्यतां दृष्टिहरा व्यराजत ॥ २८ ॥

प्रजाजनो मूर्द्धनि दर्शिताञ्जलिं
ययौ समादाय पृथक् पृथग्बलिम् ।
अभूत् शुभैका च सभा सभाजिता
निमन्त्रितास्तत्र यथाक्रमं स्थिताः * ॥ २९ ॥

तथेश्वरध्यानपरायणा जनाः
सभान्तरे चापि कृतोपवेशनाः ।
विधातुमाशीर्वचनानि संयता
विरेजिरे तां प्रति ते च सुव्रताः † ॥ ३० ॥
(युग्मकम् ।)

बभूव सौगन्धिकधूपविस्तृति-
र्दृढान्तदाश्चर्य्यकरी च संस्कृतिः ।
अभून्न केषामिव तत्र विक्रिया ?
पराजिता श्रीरपि कुत्रचित् श्रिया ॥ ३१ ॥

* This śloka refers to the *House of Commons* who, after the Crowning-ceremony was over, joined in the homage. (*Vide Holmes' Queen Victoria.*)

† This refers to the Communion-Service. "She took her seat on the Throne, when the Service was concluded and the *final blessings* pronounced."

अभूत्ततो बन्दिविसर्ज्जनक्रिया
पुनर्गृहीतं न च यन्मनो * भिया ।
मुदम्भसा सर्व्वजनावनेजनं †
तथैव केषां बहुधे च वेतनम् ॥ ३२ ॥

क्वचिच्च सङ्गीतकथा मनोहरा
सताण्डवा वाद्यवती शुभस्वरा ।
अभूत् क्वचित्ताण्डवनं तथार्व्वतां
विकाशितं तेन मनोऽम्बुजं सताम् ॥ ३३ ॥

विराजितासील्ललनाकरश्रिया
सुगन्धिपुष्पव्यतिसर्ज्जनक्रिया ।
शिवं बभौ सर्व्वमुखेन केवलं
निमीलति स्मेव भयादमङ्गलम् ॥ ३४ ॥

न चापि बाधा न नृणां क्षुतं श्रुतं
दिगङ्गनात् द्राक् कलहैरपि द्रुतम् ।
स चाभिषेको‡ऽम्बुधिमर्त्तिराबभौ
मरुच्च संस्पर्शसुखाकरो ववौ ॥ ३५ ॥

* यन्मन इति येषां बन्दिनां मनः भिया पुनर्न गृहीतं, निर्भयमासीदित्यर्थः ।

† अभूदिति शेषः । "A fair was held in Hyde Park, the theatres were thrown open and the whole of London was illuminated."
—*Holmes' Queen Victoria.*

‡ अभिषेकः—The Coronation.

भिक्टोरियोपाधिमिदं हि राज्यं
लब्ध्वा च यन्नान्यनृपैर्विभाज्यम् ।
विदिद्युते सा सुयशःकदम्बा
प्रजाजनानां फलितार्थमम्बा * ॥ ३६ ॥

यदा न रेजुर्धृतपालनव्रता-
नृपाः प्रजानां नियमेन भारताः ।
इयञ्च साल्बकुलागमञ्जरी
तदैव धात्रा निरमायि सुन्दरी ॥ ३७ ॥

प्रजास्वरूपाः प्रथतस्वभावा-
ये सन्त्यमी वङ्गविहङ्गभावाः ।
मातृस्वसैषां जनकस्वसा वा †
तेष्वेव वा स्थापितमातृभावा † ॥ ३८ ॥

वङ्गाम्बिकायाः स्वसृतुल्यकक्षा
सखीसुहृत्तद्रिपुनाशदक्षा ।
प्रजौघधेरिन्दुकलेव नारी
बलञ्च तस्याः परमोपकारि ॥ ३९ ॥

---

* इदानीं विजयिनीं विजयिन्याः कीर्तिकलापादिकञ्च वर्णयति (३६—८४) ।
† उभयत्र इत्यमिति शेषः ।

मिथोऽनुरागादनुरञ्जिताभिः
करग्रहं*प्रीतिपरम्पराभिः ।
नाम्नाद्य वर्व्वर्त्ति हितानुरागा
वङ्गाम्बिकाया बहुभाग्यभागा ॥ ४० ॥

सर्व्वप्रजानामिह यच्च वित्तं
विवेद तच्चाथ निवेश्य चित्तम् ।
त्रुटेः समुच्छेदतयैव तासां
सदा प्रसन्ना निजगाद भाषाम् ॥ ४१ ॥

सदाभिसन्धिन्नुरभून्नमासतो
जनोऽद्य को भारततः समागतः ।
इयेष तं प्रेक्षितुमादरेण सा
नृपत्वबुद्ध्या न शशाक चावशा ॥ ४२ ॥

प्रजानुरक्तिश्च सदैव निर्म्मला
धृता यया सा च निवेदितस्खला ।
प्रजामयी वापदि च प्रजावती
प्रजा प्रणेतीति यदीयभारती † ॥ ४३ ॥

* करग्रहेति—स्वप्रीत्या करधारणं, प्रजाभ्यः करग्रहणं वा ।
† आसीदिति शेषः ।

नृपालसिन्धोरिव चारुचन्द्रिका
यशोविकाशैः सितदिक्कलापिका ।
इयं प्रभावेण जगत्कृता कृता
विशृङ्खलं वीक्ष्य च भारतं सिता ॥ ४४ ॥

अथैकदा क्रोशमिव प्रयाता
प्राह स्म पुत्त्रानिति बङ्गमाता ।
"वत्साः ! क्व वेयं करधारिणी मे ?
बलस्य कार्य्ये पतितास्मि भीमे !" ॥ ४५ ॥

सखी-प्रिया सा प्रणयेन तस्या-
स्तदन्तिकस्थेव बभूव वश्या ।
क्षणेन माताथ बभौ पुरावत्
तिरोदधे पाद*गतापि सापत् ॥ ४६ ॥

(युग्मकम् ।)

अहो ययाद्यापि पवित्रधाम्ना
साम्ना महिम्ना च तथैव नाम्ना ।
सा सागरावर्त्तनिभेव जाति†-
श्चन्द्रत्विषा द्यौरिव संविभाति ॥ ४७ ॥

---

* पचे—पादाः प्रत्यन्तपर्व्वताः । माता—बङ्गमाता ।
† सा जातिरिति—इंराजजातिः ।

इयं द्रुमाणामिव यष्टिरिक्षु-
र्न तादृशी काव्यकला च दिक्षु ।
सुवर्णवर्णप्रतिमेव किं वा
मुखश्रिया स्मारितचन्द्रबिम्बा ॥ ४८ ॥

इयञ्च पर्य्याप्तसमग्रपूजना
वरा पृथिव्यां विलसन्महाधना* ।
अनन्तसाम्राज्ययशःसुसन्निधे†-
र्विशेषवित् को भवतीह सद्विधेः ? ॥ ४९ ॥

यैषा प्रजानां विहितेव माता
दिवः प्रदेशादिव गां प्रयाता ।
स्वयं विधात्रा कृतचारुयत्नं
विनिर्म्ममे या रमणीषु रत्नम् ॥ ५० ॥

सा मानवी किन्तु महीन्द्रिरेव
निषेविता सद्यशसां गिरेव ।
धीरा च वीराङ्कसमुद्भवा च
साम्यं समापन्न कयापि या च‡ ॥ ५१ ॥

---

* नासीदिति शेषः ।
† तस्याः इति शेषः ।
‡ अप्सरा नासीदित्यर्थः । आपदिति—आप्नोतेर्लुङि रूपम् ।

इहाद्य यानन्तगुणावतारा
समुल्लसद्भारतराज्यभारा ।
या वत्सला वत्सगणेष्वतीव
सर्व्वप्रभुत्वेऽपि च मानवीव ॥ ५२ ॥
या चान्विता गौरतरेण धाम्ना
भिक्टोरियेति प्रथिता च नाम्ना ।
उपर्य्यसौ क्षचितचन्द्रसूर्य्या
याचासु याश्च सुचारुतूर्य्या ॥ ५३ ॥
इयं लसद्भारतभूः प्रभूता
पवित्रतीर्थादिजलादिपूता ।
स्त्रीराज्यमासीच्च यथाद्य माता
सा नन्दते,* सा च † मुदा विभाता ॥ ५४ ॥
स्त्रीराज्यभूः स्त्रीकृतराजधानी
भूभारतीयेति जनस्य वाणी ।
क्षेत्रञ्च या तत्र सतां दयायाः
सा नन्दते, सा च नरेन्द्रजाया ॥ ५५ ॥

(युग्मकम् ।)

---

* सा—भारतभूः । † सा च—राज्ञी विभाता आसीत् इत्यर्थः ।

स्वप्नेऽपि यस्या न बभूव चित्ते
स्पृहा तथाऽन्यस्य कदापि वित्ते।
विनारिवर्गं भुवनाधिपायाः
सर्व्वप्रकारेण दयां गतायाः ॥ ५६ ॥

सा वारिधिर्भारतजाश्च मीना:
प्रसादतोऽस्या न च तेऽद्य दीनाः।
अन्यानधीनाः परितापहीना
गायन्ति तस्या यशसाञ्च वीणाः ॥ ५७ ॥

प्रसादतोऽस्याः सुचिरन्तने सुखे
प्रजा जना भान्ति धनार्ज्जनोन्मुखे।
शरीरपीड़ासु चिकित्सकालयं
व्रजन्ति, कुर्व्वन्ति * न रोगतो भयम् ॥ ५८ ॥

प्रजासु या मातृगुणस्य भित्ती-
र्बबन्ध याद्याप्यसमाप्तकीर्त्तिः।
गुणैरगाधा हतवैरिरोधा
यासीत्सदाविष्कृतशुद्धबोधा ॥ ५९ ॥

---

* भयावीति पूर्व्वान्वयः।

सुशिक्षिता यद्विषयेऽद्य वा नरा*
बले च वीर्य्ये च मताऽमन्थराः।
द्रुतज्वराश्चक्रकुला†दितोऽन्यत-
स्ततो भयं नास्ति जयस्य सन्ततः॥ ६० ॥
राजप्रभावेण विदूरिताधे-
र्या जन्मभूमिर्जयिनीत्युपाधेः।
सिन्धोः सदिन्दोः स्फुटफेनजाला
यथा, तथा सा सितभा विशाला॥ ६१ ॥
स्पर्शेन चायस्त्वमपास्य चायः
स्वर्णायते‡ऽद्यापि भवेन्नरायः।
राज्ञीप्रसादे सति शष्पजालं
मुद्राधनैः स्पर्द्धयते§ सदाऽलम्॥ ६२ ॥
सैकोपमास्य¶ प्रतिभूर्विवादे
या चान्यमूर्त्तिस्त्वधुना धनादेः।
सा नोट-पत्री‖ करिघोटकादे-
र्धनायते मूल्यविधौ क्रयादेः॥ ६३ ॥

* वा नरा—इति वा-शब्दः पक्षान्तरं सूचयति। पक्षे नराः। वानरा इति शब्दपक्षः कटाक्षितः।
† चक्रकुलेन रुषियादयो व्यज्यन्ते।
‡ स्वर्णायते—इति आचारेऽर्थे कर्त्तुरुपमानात् क्यङ्।
§ स्पर्द्धयते—"तत्करोति तदाचष्टे" इत्यनेन णिच्।
¶ सैकोपमेति—पूर्व्वश्लोकीनां कथां दृष्टान्तेन प्रपञ्चयति।
‖ नोटपत्री—The currency notes. धनायते—अत्रापि पूर्ववत् आचारेऽर्थे क्यङ्।

मुद्राभिधाना विषये समस्ते
नारी नरीनर्त्ति गता नृहस्ते।
मुखारविन्दैः कृतसन्निधाना
तस्मान्ततोऽस्या भुवि का समाना? ॥ ६४ ॥

(युग्मकम्।)

श्ववृत्ति*सेवाहतदैन्यशोकः
प्रायः कुवेरायत एव लोकः।
पुरेव चाद्यापि यदाधिपत्ये
स शिक्षितो यद्यपि भाति सत्ये† ॥ ६५ ॥

धनानि तिष्ठन्ति सदा जने जने
यदीयराज्येऽद्य सुतुङ्गवेतने।
स्ववृत्तिरेवञ्च पदे पदे तता
प्रसन्नसाहेबगणादुपागता ॥ ६६ ॥

लब्धाधिकारापि च राज्यरत्ने
तद्रक्षणस्याविश्वास‡ यत्ने।
क्षेमात् प्रजानां कृतचारचारा
शुद्धान्तदुर्गाधिगताप्युदारा ॥ ६७ ॥

---

* श्ववृत्तिः—पराधीनजीविका। स्ववृत्तिरिति वा पाठः, तेनात्मजीविकेत्यर्थः।

† स—लोकः। स यदि शिक्षितः, सत्येऽपि यदि च वर्त्तते, तदैवेति भावः। कुवेरायते—कुवेर इव आचरति इति क्यङ्।

‡ अविश्वास—अविश्वासीत्, सेति भावः। राज्यरक्षणाय वै सर्व्वदैव नियुक्ता आसीदिति तात्पर्य्यार्थः।

हूंराजजातिः सुखसिद्धवासा
धराधरस्येव तले स्थिता सा ।
सान्निध्यतोऽस्या भयतः सुदूरे*
राज्ये वरीवर्त्त्यनपास्तसूरे† ॥ ६८ ॥

यतो यतो धावति साद्य जाति-
स्ततस्ततः शत्रुजयो विभाति ।
प्रतापतोऽस्याश्च शुभाशिषा वा
सा तादृशी, सा च तथाप्रभावा ॥ ६९ ॥

स्वजातिवृन्दस्य विपत्पयोधिं
दृष्ट्वेव या चाप सुतुङ्गमाधिम् ।
कुतो नु वात्सल्यमिदंवत्‡दुद्यत्
राज्याज्जयिन्या वहिरस्ति तद्वत् ? ॥ ७० ॥

न सैन्यमन्यत्प्रचकार सा यत्
रराज राज्ञीत्यकुतोभया तत् ।
विपक्ष-सेनास्वरितं स्वपक्षान्
पश्यन्ति यद्वीजितगृध्रपक्षान् ॥ ७१ ॥

* भयतः सुदूरे—निर्भीका सती क्यापि वसतीति भावः ।
† सूरः—सूर्यः । ‡ इदंवत्—एतद्रूपम् ।

का वा कथान्या भवति प्रजादे-

र्वन्या विभाद्यन्ति न जातिवादे ।

एकत्र घट्टे कृतवारिपाना

नमन्ति तिष्ठन्ति गताभिमाना: ॥ ७२ ॥

झषा हि जानन्ति गुणं सुदक्षं

यथा जलस्योत्थितदेहरक्षम् ।

राज्ञीप्रसादस्य तथैव तत्त्वं

प्रजा हि जानन्ति लसन्महत्त्वम् ॥ ७३ ॥

यदाज्ञया रोगिजनस्य रोग:

व्यलीयत द्राक् रचितप्रयोग: ।

सेनाधि*विध्वंसविधावकल्यं †

चिकित्सकैरुद्ध्रियते स्म शल्यम् ॥ ७४ ॥

राज्यं विनष्टं भुवि राजदोषात्

भवेदमात्यप्रभवादतोषात् ।

नासीत् स राज्ञ्या, न च वा स तेषां‡

राज्ञ्यैव रक्षाकवचञ्च येषाम् ॥ ७५ ॥

---

* आधि:—मानसी व्यथा । † अकल्यं—झटिति ।

‡ स—राजदोष: । स—अतोष: ।

अद्यापि यस्याः सचिवेष्वतोषं
विलोकते नो खलु कोऽपि दोषम् ।
तेनैव राज्यं चिरमस्तशोषं
विराजते सम्प्रति पूर्णकोषम् ॥ ७६ ॥

मुद्राधिपत्येऽपि च लाङ्गले च
भान्ति* प्रजा युद्धचमूबले च ।
राज्ञीति नाम्ना खलु ताश्च तुष्टा-
स्तदीयवात्सल्यकथाभिजुष्टाः ॥ ७७ ॥

विद्याप्रतिष्ठा जलदानवापी
या लोकयात्राक्षतसत्पथापि ।
यस्याः प्रसादैरधुनाप्युदारे
ज्वलन्ति दीपाश्च तथान्धकारे ॥ ७८ ॥

इति प्रजानां हृदये कृतासना
शशास राज्यं महनीयशासना ।
सुहृन्मुदां यष्टिरियं मनोरमा
तथा द्विषद्दायसवारणक्षमा ॥ ७९ ॥

---

* भान्तीत्यस्याप्यपीति पूर्व्वोक्तेनान्वयः ।

अधिश्रितश्रीर्वयसि स्थिता नवे
नवेन्दुभासाम्यमियाय सा भवे ।
सिताम्बरत्विट् विकसत्कुमुद्वती
श्रिया समुद्भासितविग्रहोन्नतिः * ॥ ८० ॥

ततः शनैः प्राप्य च यौवनं सा
श्रिया समुद्दीपितराजवंशा ।
क्रमोन्नतिं प्राप विधोः कलाया
जयिन्यसौ श्रीपरिदृश्यकाया ॥ ८१ ॥

सभां शुभस्थां ग्रहकान्तिकान्तां
पक्षद्वयान्दोलनगाञ्च शान्ताम् ।
विधाय तामिन्दुकलाञ्च चारु-
स्त्रिपक्षमुद्भासयते स्म कारुः † ॥ ८२ ॥

* अम्बरं—वस्त्रं, पक्षे—आकाशम् । चन्द्रपक्षे—अम्बरे श्वेतभा, राज्ञीपक्षे—वस्त्रस्य धावल्यम् । कुमुद्वतीति—राज्ञीपक्षे—कुः—पृथिवी, मुत्—आनन्दः ; चन्द्रपक्षे—कुमुद्वतीपुष्पम् । राज्ञीपक्षे—विग्रहः—देहः । पक्षान्तरे—विः—गगनं, तत्र ग्रहाः—शुक्रादयः ।

† ग्रहः—नवग्रहः, राज्ञीपक्षे सभापक्षे च—ज्ञानम् । पक्षद्वयमिति—इन्दुकलापक्षे—सितासितं पक्षद्वयम् ; पक्षे—सभायाः पक्षद्वयम्—उन्नतिशीलत्वं (Liberals), रक्षणशीलत्वञ्च (Conservatives) । कारुः—जगत्कारुर्विधाता । सभा—पार्लियामेण्ट(Parliament)-नामधारिणी । त्रिपक्षं—सभां (पार्लियामेण्टाख्यां), चन्द्रकलां (प्रसिद्धां), तां (विजयिनीम्)—इति त्रिपक्षम् ।

स्पर्शाश्मसौन्दर्य्यनिभेव गुर्व्वी
तथा भविष्यन्नृपजन्मदोर्व्वी।
वरिष्ठविज्ञानघना सुमाना
खृष्टप्रसूतेरिव या समाना* ॥ ८३ ॥

वर्णत्विषाङ्गैर्मृदुभिः सगन्धैः
पतत्त्रिपत्त्रै रचितानुबन्धैः।
सा शाणिताग्रेव च पञ्चवाणी†
पञ्चोपचारैः‡नृभिरित्यमानि ॥ ८४ ॥

नार्य्यो§ यदीयांशुकरत्नभारं
चक्रुः समादाय मृदुप्रचारम्।
पुरश्च पश्चाच्च तथैव तासां
चलत्प्रभा भीतिमती सुभासाम् ॥ ८५ ॥

* स्पर्शाश्मा—स्पर्शमणिः, तत्सौन्दर्य्यं खृष्टमातरि राज्ञाञ्च। भविष्यन्नृपः—खृष्टः, राज्ञीपक्षे—भविष्यन्नृपास्तत्पुत्राः। जन्मदोर्व्वी—जन्मभूमिः, प्रसूतिरिति यावत्; किञ्चिदव्यवहितकाल एव पुत्रप्रसवात् भविष्यत्पदप्रयोगः। अन्यत् सर्व्वं सुगमम्।

† पञ्चानां वाणानां समाहारः—इति पञ्चवाणी (स्मरस्येति शेषः)। अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट इति वार्त्तिकानुशासनम्। एतेन स्मरवाणसादृश्यं नाटयति कविः।

‡ वर्णः, त्विट् (दीप्तिः), अङ्गं, गन्धः, पतत्त्रिपत्त्रं (पक्षिपक्षः)—इति पञ्चोपचाराः।

§ नार्य्यः इत्यादि—*i. e.* The train-bearers.

आसन्नपाणिग्रहणं वयस्या*-
स्तस्याः समुद्वीक्ष्य लसद्गृहस्थाः।
आसंस्तदानन्दविधावखर्व्वे
तन्मन्त्रिणस्ते सुहृदश्च सर्व्वे॥ ८६॥

वरेति पात्रेत्यभिधीयमाना
ह्रियातुरा सा परिवृत्तमाना।
पुरः सखीनां सुमुखी चलाक्षं
चकार चालीकरुषा कटाक्षम्॥ ८७॥

वराभिसन्धिप्रथया ततस्ते
तद्घोषणापत्रधराः स्वहस्ते।
काष्ठां परां प्रापयितुञ्च लक्ष्म्या-
स्तामानन्दुस्तरसा स्वपक्षाः॥ ८८॥

वह्निन्दुमे खृष्टविभोः सम्रून्ये
वर्षे च तुर्य्ये† द्यमेऽह्नि पुण्ये।
स पाणिबन्धः शुभफेब्रुयारे‡-
र्दिङ्नेदिनीकम्पयिता सुवारे॥ ८९॥

* अधुना आघर्मसमाप्तेः विजयिन्या विवाहः (Engagement) प्रस्तूयते।

† १८४० खृष्टाब्दे।

‡ February.

अभूतपूर्व्वः खलु यः पुराभूत्
विपक्षपक्षस्य तथा मनोनुत् ।
व्ययैरकार्षीत् भुवि यस्य निःस्वं
पदं क्रयादे*स्तकितञ्च विश्वम् ॥ ९० ॥

(युग्मकम् ।)

इति गृहजलधेः पवित्रपारं
सचिवगणः सगणस्ततोऽभ्युदारम् ।
घटयितुमुचितं दयां दधत्या
वरवरणं चकृपे धिया महत्या ॥ ९१ ॥

इति श्रीश्रीश्वरीये विजयिनीकाव्ये
विजयिनीराज्यप्राप्तिर्नाम
द्वितीयः सर्गः ।

---

* क्रयादिः पदं — पण्यवीथिकास्वयोः ।





# तृतीयः सर्गः ।

किशोरलावण्यनिधेरनन्तरं
स्वयौवनं रत्नमियाय सा परम् ।
जयिन्यसौ रक्तसरोजवर्णिका
श्रुतिस्फुरच्चारुसुवर्णकर्णिका ॥ १ ॥

न गोचरे भारतवर्षवासिनां
स्थिताप्यसौ तद्‌यशसाञ्च भाषिणाम् ।
कथाभिरुच्चैर्यशसां समातता
न कस्य सा कर्णपथं समागता ? ॥ २ ॥

या मञ्जुला रत्नकदम्बपीना
पुष्पायुधस्त्रीव वयोनवीना ।
सूर्य्योऽपि राज्ये भजते न चास्तं
मनोऽपि यस्याः परितः प्रशस्तम् ॥ ३ ॥

मनांसि लावण्यसरोवरेऽस्यां
राज्ञामथासन् कमलानि* तस्याम् ।
लब्धुं न कस्यापि बभूव पुण्यं
स्वयंवरस्यासनमत्र शून्यम्† ॥ ४ ॥

केषां तदुल्लासपथङ्गतानां
लाभे च विश्वासविवर्ज्जितानाम् ।
अभूत्तदाशोत्थितहृत्तरङ्गः
स्वान्तेषु‡ लीनः क्षतशक्तिसङ्गः ॥ ५ ॥

बभूव सा यौवनरत्नमञ्जुला
सभा बभौ तद्वरसंग्रहाकुला ।
चराचरे चारुचराः प्रतस्थिरे
नृपात्मजाः सद्मनि यत्र रेजिरे ॥ ६ ॥

वरो जयिन्याश्च बभूव भौमः§
स्थिरो विवाहं प्रति सार्व्वभौमः ।
समं सुतैर्यस्य सुताः कुमार्य्यः
स्फुरन्त्यहोऽद्यापि च राजनार्य्यः ॥ ७ ॥

---

* मनांसि एव कमलानि ।   † बभूवेति शेषः ।

‡ स्वान्तेषु—मनःसु । तदाशा—तल्लाभाशा इत्यर्थः ।

§ सम्प्रति विवाहः (Marriage) प्रस्तूयते विजयिन्याः । तत्रादौ पात्रवर्णनम् (७—१७) ।

स चाल्ब्यर्ट्* स विराट् स पार्थिवः
स चाभवद्भाग्यभृतां महानिव ।
स्वरूपसंक्षोभितकामिनीमना:
प्रशंसुरेनं न च केऽपि सज्जनाः † ॥ ८ ॥

तमेनमुल्लासितचारुयौवनं
प्रमोदिताः के न समीक्ष्य सज्जनम् ? ।
कचाश्च यस्यास्तरुणस्य सम्पदा
विरेजिरे के‡ भ्रमरभ्रमप्रदाः ॥ ९ ॥

मणिप्रसूनश्रियमावहन्त-
स्तथासिता-श्चारुतरा लसन्तः ।
वेशैर्भुवि ख्यातिमुपाददाना
नवश्रिया मौलिविराजमानाः ॥ १० ॥

(युग्मकम् ।)

तुनाव यं भूमिभृतां समाजः
स राजपुत्रः स च भाविराजः ।
कुलेन शीलेन च शिक्षया च
गुणैर्यमुच्चैरभजद्दया च ॥ ११ ॥

---

* Albert (of Saxe-Coburg and Gotha).

† केऽपि सज्जनाः इत्यादि—इति काकुः ।   ‡ के—मौलौ ।

एतेन सार्द्धं भुवनस्य राज्ञ्या
मतं विवाहाय ददुस्तदा ज्ञाः* ।
प्रीतिर्हि यस्याः खलु येन जाता
तेनैव भाव्या शुभता ससाता† ॥ १२ ॥

स आल्बर्ट्‡ इत्येव समाख्यया श्रुतः
प्रजार्घ्यमानेन निरन्तरं स्तुतः ।
अजन्यनेनैव करग्रहक्रिया
महामहिष्याः सममङ्गलश्रिया ॥ १३ ॥

वरो जयिन्याः स समागतस्ततः§
कथेयमुच्चैरभवत्प्रधानतः ।
तडित्पथेनाब्धिमिता च सा तता
क्षणादभूत् भारतवर्षमागता ॥ १४ ॥

ततो गतिर्भद्रनृणां वरादरा
तमोच्छितुं प्रादुरभूत्त्वरा त्वरा ।
गृहे गृहे वादितवाद्यवादकै-
रभूत् सभा चापि सुखाद्यखादकैः ॥ १५ ॥

---

* ज्ञाः—पण्डिताः । "ज्ञो विद्वान् सोमजेऽपि" चेति कोषः ।

† "शर्म्म-सात-सुखानि च" इति कोषः ।

‡ Albert.

§ Prince Albert landed at Dover on the 6th February 1840 and reached Buckingham Palace on the 8th.

गीतिः कृषिश्चापि तथैव चित्रा
कला च यत्कण्डमगात्यचित्रा* ।
ताभिश्च साक्षादिव कन्यकाभिः
राज्ञा च योऽशोभि समेधिताभिः ॥ १६ ॥

उदार-विद्यः स च योधनाखे
विज्ञानशिल्पादिविशेषशास्त्रे ।
उत्साहदो लण्डनमण्डनस्य
श्रियश्च चित्रस्य चिरन्तनस्य† ॥ १७ ॥

खृष्टे शताष्टादशसंख्यकेऽब्दे
चतुर्थ्यमाने‡ च सतुर्य्यशब्दे ।
तस्या विवाहोऽजनि दिङ्मिताहे§
माघे मुदा रङ्गतरङ्गवाहे ॥ १८ ॥

* गीतिः—Art of music. कृषिः—Industrial art. चित्रा कला—Art of painting. "His feeling for *art* in all its forms was very sensitive and his executive skill, both as ***Musician*** and *Painter* very considerable."—***Encyclopædia Britannica.***

† "Here the prince conceived the idea of illustrating the life and work of one great master—Raphael—by a complete series of reproductions of his designs."—***Holme's Queen Victoria.***

‡ १८४० खृष्टाब्दे । सम्प्रति विजयिन्या विवाहोद्योगः (Preparations for marriage) वर्ण्यते (१८—११) ।

§ दशमदिने इत्यर्थः । माघे—*i. e.* In February.

करग्रहोऽस्या नृपगर्व्वखण्डनः
स्वया श्रिया ग्रस्तसमस्तखण्डनः* ।
शिखिश्रिया राजिरगाद्दलीकतां
व्यलोकयन्† द्यामपि गामिवागताम् ॥१९॥

द्वीपः प्रदीपस्य रुचोज्ज्वलांशः
शब्दैरिवाभूज्जनमाह्वयन् सः ।
भूकम्पमाशङ्क्य पयोधिरुच्चै
रुराव वेलावनराजिगुच्छैः ॥ २० ॥

द्यौः शब्दसङ्घैरिव सम्पफाल
भल्लूकराजासन‡मुच्चचाल ।
वाचंयमानां निभृतप्रदेशे
भग्नं मनो, वाद्यकृतप्रवेशे ॥ २१ ॥

खनिस्थकम्पे कनकादिनिर्म्मिता
ससप्तपातालविलादिसंस्थिता ।
व्ययै§र्निजास्तित्वविनाशशङ्किनी
धनेश्वराणामपि भावनाजनि ॥ २२ ॥

* London.

† व्यलोकयन्—जना इति शेषः ।

‡ पक्षे—रुषियाधिपतेरासनम् ।

§ व्ययैः—विवाहकार्य्यव्ययैः ।

साऽभ्यर्च्चिताग्रे प्रबभूव काली *
पुष्पे निपातोन्मुखषट्पदाली।
दृष्टिर्बभौ रक्तिमसान्द्रधारा
भूभारते फल्गुरजःप्रकारा ॥ २३ ॥

दृष्टिक्रियादृष्टिरभूत्तदादौ
तयैव चाशोभत तत्र सा गौः † ।
पौष्णी च वाङ्मय्यभवच्च दृष्टि-
स्ततस्ततः स्तम्भितनेत्रदृष्टिः ॥ २४ ॥

बहुप्रकारेण सदा नृपा नता
भृशं वचः सुहृधिरे तदागताः।
वसुन्धरानन्दमयीव निर्म्मिता
रसाकरारक्तिरभूत्तिरोहिता ॥ २५ ॥

तदाज्ञया ये निगड़ादिमुक्ता
न्ययुञ्जताशीस्तु त एव सूक्ताः ‡ ।
तेषां प्रियाणाञ्च बभूव तोषः
शुभध्वनिर्मङ्गलगीतघोषः ॥ २६ ॥

---

* कलिकातायां कालीघट्टे कालीपूजां मनसि कृत्वेदमुक्तम्।

† गौः—पृथिवी।   ‡ सूक्ताः—मधुरभाषिणः।

तदङ्गगा कञ्चुलिका* सरला,
तस्या धुरन्धारविधौ सयत्ना ।
रराज राजिर्नवसुन्दरीणां
कटाक्षदक्षेव च किङ्करीणाम् ॥ २७ ॥

तारावलीनामिव तत्र तासां
मध्ये कलाजीव† सुचारुभासाम् ।
सा पाटलाभारुणगौरवर्णा‡
ललास ताड़ङ्क-निबद्ध-कर्णा ॥ २८ ॥

चूड़ामणिश्रीषु मणिं§ नवं सा
बबन्ध सन्दीपित-राजवंशा ।
रूपेण सम्पादितचारुमूर्त्ति-
र्भूषावलीनामभवच्च पूर्त्तिः¶ ॥ २९ ॥

तस्याः प्रयाणे, वरसुन्दरीणां
प्रयाणयोग्याम्बरधारिणीनाम् ।
वक्त्रैरभूच्चन्द्रमसाञ्च सृष्टि-
स्तासां पथि प्रीततराश्चिदृष्टिः ॥ ३० ॥

* कञ्चुलिका—गाउन् इति भाषा, श्वाशीद्दिति शेषः । "Her train was borne by 12 bridesmaids, daughters of Peers." † शाली काला—चन्द्रकला ।
‡ अत्यन्तगौरीत्यर्थः । § मणिं—कहिनूरनामकमिति यावत् ।
¶ "She wore a wreath of orange blossom, and round her shoulders the collar of the Garter."—*Holme's Queen Victoria.*

सीमन्तविन्यस्तहृषन्मणिः * सा
तेनैव विस्मापितसर्व्वविश्वा ।
अपूर्व्व कापि द्युतिरुन्नतायाः
दिङ्मण्डलाह्लादकरी शुभायाः ॥ ३१ ॥
सिता न कृष्णा न तथैव पीता
पीतासिता चापि पुनः सितीता ।
पदे पदे कञ्चुकिलाभिराभि-
र्यासीत् वराभिर्विलसद्भिभाभिः ॥ ३२ ॥
सा देवसक्तेव न मर्त्यरक्ता †
देवी यथा श्रीरनुजारिभक्ता ।
रराज राज्ञी नरराजपार्श्वे
शुचिस्मिता माल्यरजःप्रकर्षे ॥ ३३ ॥
वाद्यैरगद्यैर्जयमङ्गलेन
स नीतपूर्व्वः‡ चतुरङ्गसेनः ।
सा चन्द्रिकेवाविरभूत्प्रसन्ना
पात्रस्य गात्रान्तिकसन्निषण्णा ॥ ३४ ॥

* हृषन्मणिः—कहिनूरनाम्ना ख्यातः ।

† अथाधुना राज्ञ्याः परिणयक्रिया (Celebration of marriage) वर्ण्यते (३३—४८)।

‡ "भूतपूर्व्वे चरट्" इति सूत्रे दर्शनात् "पूर्व्व"शब्दस्य परनिपातः, सुप्सुपेति समासश्च। सः—वरः। सा—विजयिनीत्यर्थः। "The marriage was celebrated at the Chapel Royal, St. James's." "The Prince had *preceded* the Queen to the Chapel," "After a short interval the Procession of the bride entered."

वरस्य कण्ठे स्रजमर्पणाय
दधार, लज्जां मनसा विहाय ।
स्मेरानना सर्व्वसमक्षमेषा
वेशप्रवेशाच्च सुचारुकेशा ॥ ३५ ॥

उद्यानपुष्पै रचितोपरागा
गन्धैश्च नीरन्ध्रितदिग्विभागा ।
विवाहशोभाजनि तत्र तस्या
दिदृक्षयानन्दलसन्मदस्या ॥ ३६ ॥

करं दधारात्मकरेण भर्त्तुः
किञ्चिद्ह्रिया तत्र विवाहकर्त्तुः ।
शरच्चरच्चन्द्रकलेव प्राची
भृशं श्रियालक्ष्यत चारुगात्री* ॥ ३७ ॥

सा जङ्गमा चन्द्रकलेव प्राची
शुभप्रभाभासितचारुगात्री ।
बभूव पद्मेव विराजमाना
लावण्यगङ्गाकृतसन्निधाना ॥ ३८ ॥

* "अङ्गगात्रकण्ठेभ्यो वक्तव्य"मित्यनेन वा ङीष् ।

तौ दम्पती हीर*हिरण्मयभाजौ
दुकूलशोभाविलसन्नमाजौ ।
यावेकतालावपि सप्ततालौ†
कर्णीरथे‡ रेजतुरुच्चभालौ ॥ ३९ ॥

वाद्योद्यमैर्गर्ज्जदिलाबिलाया§
मुखाम्बुजन्यस्तमनःशिलायाः ।
काप्याविरासीद्द्युतिरिन्दिराया
वरस्य तस्यापि वरा भरायाः ॥ ४० ॥

ताम्बूलसेवाविमुखे प्रदेशे
मुखे त्विडन्यैव तथैव केशे ।
अन्या विवाहव्यवहारमाला
तथैव च व्यञ्जनपक्तिशाला¶ ॥ ४१ ॥

न रञ्जितं सूक्ष्मपटैः स्त्रियः शिरः
ततो न चास्मिन् मुखचन्द्रिकागिरः ।
न देशरीत्या च भुवः प्रदक्षिणं
न पूजनं दैवमभूत् सदक्षिणम् ॥ ४२ ॥

---

* हीरः—हीरकम् ।

† एकतालाविति मनुष्यमानेन ; सप्ततालाविति कर्णीरथाधिरोहात् ।

‡ कर्णीरथः—पुष्पादिरञ्जितरथः ।  § इला—पृथिवी, तद्बिलानि—गह्वराणि ।

¶ सर्व्वत्र चासीदिति शेषः । पक्तिः—पाकः ।

न चाग्निरायान् न तदिन्धनागमः
पुरोधसा न स्रुच पच्यते नमः ।
तथापि निष्पत्तिमियाय सा क्रिया
मखाङ्गपूर्णेव न राजतो भिया ? ॥ ४३ ॥

मुखेन तन्मन्त्रमुवाच पण्डितः
पुरोहितः * कञ्चुकवस्त्रमण्डितः ।
न वर्त्तितव्यं हि हिमप्रदेशिना
अनेन केनापि च कञ्चुकं विना ॥ ४४ ॥

मिथः श्रिया पूर्णतरावुदारौ
नृणां वने चञ्चलपुष्पहारौ ।
तौ रेजतुर्व्यञ्जितनेत्रतारौ
पत्रैः प्रसूनैरिव कर्णिकारौ † ॥ ४५ ॥

पुरेव सहर्षपारत्नमन्दिरे
बहुश्रिया दीपवरा विरेजिरे ।
विजग्मतुस्तत्र समं ‡ महामती
करं समादाय करेण दम्पती ॥ ४६ ॥

* पुरोहितः—The Archbishop of Canterbury. † वृक्षान् विशेषकर्णिकारः ।
‡ समं—तुल्यकालम् । "After the conclusion of the ceremony, the Queen and Prince Albert, with the members of the Royal Family and the Principal Ministers of State passed into the *Throne-room."—Holme's Queen Victoria.*

निजप्रियाभिः सह चारुदृष्टयः
समाययुस्तत्र नृपाः समष्टयः।
तयोर्द्वयोः सौमुखदर्शनेच्छया
प्रतिष्ठया व्यापृतया च भावया* ॥ ४७ ॥

अनेकघस्रा†ण्यधि ताण्डवं बभौ
दिने दिनार्द्धे‡ निशि चोदिते रवौ।
दिदृक्षया चापि विरेजिरे जनाः
सभागृहे हेमविकल्पितासनाः ॥ ४८ ॥

इत्थं तयोः पाणिनिपीडनेन
दृढैकताभूत् विधिबन्धनेन।
वरो बभौ वृक्ष इवात्मनामा
छाया परा तस्य बभूव रामा ॥ ४९ ॥

---

* प्रतिष्ठयेत्यादि—प्रतिष्ठां गतया अनया इत्यर्थः, व्यतिषक्तया भावया च इति भावः।

† घस्रः—दिनम्।

‡ दिनार्द्धे—"अपूपार्द्धं मया भक्षितम्" इति भाष्योदाहरणदर्शनेन षष्ठ्यपि पाक्षिकसमासः उक्तः—इति गोपीचन्द्रः। तेन दिनार्द्धे इति पदं सिध्यति।

तयोरथान्तर्नगरे प्रवासः
क्रमात्ततोऽभूत् यशसां विकाशः ।
इमौ मिथः केवलमुच्चगीतौ
बभूवतुर्नाम वियोगभीतौ ॥ ५० ॥
समासनस्थौ च समानभावौ
समान्तरावेकरसानुभावौ ।
समत्विषौ सैन्यलसत्पताकौ
विरेजतुस्ताविव चक्रवाकौ* ॥ ५१ ॥
सखा सखीस्नेहरसे निमज्जितो
रराज तत्रैव चिरं तयान्वितः ।
सखी तु सख्युः समुदायमङ्खला
बभौ करीन्द्रस्य सुवर्णशृङ्खला ॥ ५२ ॥
ततो विवाहे रचिते च साङ्के†
रिक्थस्य वर्षैरुपशोभिताङ्के ।
दिष्ट्या प्रभूणाञ्च हृहृद्यशोदः
सभक्ष्यभोजः प्रबभौ प्रमोदः‡ ॥ ५३ ॥

---

* पुमान् स्त्रियेति "चक्रवाकौ"वित्यत्र एकशेषः । † साङ्के—मिलने ।
‡ विवाहानन्तरमिदानीं भोजनव्यापारो (Wedding-Banquet) वर्ण्यते किञ्चित् (५३—६४) ।

सूर्य्यद्वेषिमरीचिदीपगहने
प्रत्येकदीपानने
रम्ये श्वेतशिलातले सुविमले
संस्कारकार्य्योज्ज्वले ।
दर्व्वीभिः कनकादिकाण्टकवरै-
रन्यैरुपायान्तरै-
राहारोऽयमुपाह्वयत् जनचयं
भिन्दंश्च पीड़ाभयम् ॥ ५४ ॥

एकदा त्रिविधमिन्द्रियं शनै-
स्तृप्तिमाप बहुधा विलोकनैः ।
एकपङ्क्तियुगनद्धवाहि तत् *
भोजनं प्रवद्दते सुगन्धवत् † ॥ ५५ ॥

घ्राणतर्पणमभून्नसोर्घनः
श्रोत्रयोरशनमुत्तमः स्वनः ।
व्यञ्जनं वदनमुत्तमौदनं
लोचनञ्च बुभुजे प्रियाननम् ॥ ५६ ॥

* पङ्क्तिः—पाकः । युगनद्धवाहि—एकैकशः स्थाने युग्मयुग्मक्रमेण भोजनमिति भावः ।
† सर्व्वधनीतिवत् समासः । 'प्रभाववान्,' 'हंसचिह्नदुकूलवान्' इत्यादिवत् प्रयोगश्च ।

कोऽपि तत्र मधुपानमोहिता
लज्जया समभवंस्तिरोहिताः ।
नायिकाभिरमनेऽभवन् परे
सत्कथाभिरुदिताग्रहा वरे ॥ ५७ ॥

उच्चमूल्यवरकञ्चुकत्विषा
तत्सदोऽथ शुशुभे स्वगोष्ठ्या ।
तन्मुखैर्ललिततेजसोज्ज्वलं
पङ्कजव्यतिकरैरिव स्थलम् ॥ ५८ ॥

मिष्टान्नपक्वान्नलसत्सुपूपै-
र्निर्माणमाहात्म्यविभातरूपैः ।
मत्स्यपिण्डकाद्यैर्दधिदुग्धकुल्या
प्रवर्त्तिताभूदतिदीर्घमूल्या ॥ ५९ ॥

नानाविधाः संस्कृतमांससङ्घाः
समाहृताश्चैव विहङ्गजङ्घाः ।
यथैव च प्रादुरभूच्च सूक्ति*-
स्तथैव तेषां प्रबभूव भुक्तिः ॥ ६० ॥

* सूक्तिः—भोजनकथा (Table-talk) ।

अन्या बभौ व्यञ्जनपण्यशाला
वयोदयाद्दीपितहेमजाला ।
राजाज्ञया द्रव्यवरैरदीर्णा
बभूव सा तत्क्षणमेव पूर्णा ॥ ६१ ॥

वसन्तपक्वाम्बरसै रसालैः
फलैस्तथा दुग्धमयालवालैः ।
द्राक्षादिभिर्दाडिमनारिकेलं*
भोक्तुर्ददौ प्रीतिमथातिवेलम् ॥ ६२ ॥

कदलफलसमष्टिर्दृष्टिमात्रात्मतुष्टी-
र्व्यंजनयदिह, लब्धे तृप्तिद्वन्द्वेऽस्तनिन्द्वे ।
मधुरसरघचक्राद्या च धारा मधूनां
सुखयति हृदयाब्जं सा स्म तासां बधूनाम् ॥६३॥

शिरसि शिरसि तेषां यन्त्रतः पुष्पवृष्टि-
र्व्यरचयदतिशोभां, तुष्टिरासीत् सपुष्टिः ।
इति कतिपयवस्तैः पार्थिवोल्लासयाप्तं†
परममशनजातं लीलयाभूत् समाप्तम् ॥ ६४ ॥

* अत्र समाहारवत्त्वो द्रष्टव्यः (जातिरप्राणिनामिति सूत्रेण) । The two stanzas (62 and 63) refer to the Dessert-Service.

† पार्थिवानामुल्लासो यत्रेति पदं "लीलया" इत्यस्य विशेषणम् । आप्तं—प्राप्तम् ।

एवं श्रिया दिग्विजयार्ज्जनेन
वयःप्रमाणेन तथा धनेन ।
तेनैव भर्त्त्रा मुमुदे सुगात्री
नारीषु सा श्रेष्ठतमा सुपात्री ॥ ६५ ॥

अथैकदा तेन सहैव पत्या *
चकार सा वाजिरथस्य गत्या ।
वहिःप्रचारं रचितेऽधिमञ्चे
वने वसन्तीय†मरुत्प्रपञ्चे ॥ ६६ ॥

तदङ्गमङ्गेन तयैकतीकृतं
तुरङ्गपृष्ठे तु तयैव तद्धृतम् ।
अभूत्तयासौ मृगयाकृताग्रहः
स चार्द्धनारीश्वरविभ्रमावहः ॥ ६७ ॥

सा हेमगौराङ्गमपाङ्गभङ्गैः
स्वभ्रूलताचारुविलासरङ्गैः ।
निक्षिप्य वाद्यास्तृतगीतसत्रे‡
पात्रस्य गात्रे विबभौ सपत्रे§ ॥ ६८ ॥

---

* अथेत्यादिना चतुर्भिः श्लोकैः मृगयावर्णनं (Hunting-Excursion) प्रस्तूयते । वाजिरथस्य—अश्ववाहितयानस्येत्यर्थः ।

† वसन्तीयेति—हितार्थे प्राक् क्रीतादिति छप्रत्ययः, साध्वर्थे तु सन्निवेशेत्यादिना यत्-प्रसङ्गः ।

‡ सत्रं—वनं, मृगयाभूमिरित्यर्थः ।

§ सपत्रे—सवाहने, अश्वोपरिस्थे इत्यर्थः ।

चरन्त्यसौ स्नेहमयञ्च दुग्धं
तं मोहितं प्राक् पुनरेव मुग्धम्।
चक्रे च, बभ्राम च सा निकुञ्जे
तेनैव सार्द्धं स्फुटपुष्पपुञ्जे॥ ६९॥

व्याघ्रात् सदारो हरिणः सदारात्*
एकः स बिभ्यत् प्रययौ तमारात्।
मृगी च तं वीक्ष्य मृगेण नीता
सुदीनदृष्टिं तनुते स्म भीता॥ ७०॥

प्रिया च तं प्रन्तमिवान्तरस्था
निवारयामास पतीङ्गितस्था।
स चान्यदन्यद्वनमाविवेश
प्रियाज्ञयाकारि मनोनिवेशः॥ ७१॥

लक्ष्येष्वयं प्रागभवत्प्रशंसी
स वादयामास वनेषु वंशीः।
निशम्य गीतानि मृगा विलोल-
स्ततस्तमीयुस्त्वरितं सकोलाः॥ ७२॥

* इदानीं तयोरष्टाभिर्मृगयावर्णनं क्रियते (७०—७७)।

स वेष्टितोऽभून्मृगजालकेन
दाता यथा याचकमण्डलेन ।
स याचितः प्राङ्मृगयाख्यशास्त्रं
प्रध्मापयामास च नालिकास्त्रम् * ॥ ७३ ॥

वनेचराणां प्रबभावजेयः
पञ्चाननौजाः स च सारमेयः ।
राज्ञीङ्गितैः षड्गुणयोगयुक्तः
बली वनेऽभून्निजपाशमुक्तः ॥ ७४ ॥

श्वा मातरिश्वेव ततस्त्वरावान्
गर्त्तादपि व्यानयति स्म शावान् ।
चक्रे च सम्मर्द्दनमप्युरूणां
वनान्तरेऽध्यासवतां रुरूणाम् ॥ ७५ ॥

इति मृगमहिषादेर्व्यूहभङ्गं विधाय
प्रणतसहचरेभ्यस्तानिमान् सम्प्रदाय ।
वनभुवि विचरन् स प्रश्रया श्वस्तदानीं
परतरमरमापत् † कान्तया राजधानीम् ॥ ७६ ॥

* नालिकास्त्रं—बन्दुकम् इति भाषा । † आप्नोतेर्लुङि रूपम् ।

वनमिति घनहिंस्रैः शून्यरूपं विधाय
प्रियजनगणसङ्गी तत्प्रदेशं विहाय ।
पथि च जयपताकापल्लवैर्वीज्यमानः
पुरमनु जयलक्ष्म्या प्राविशल्लक्ष्यमानः ॥ ७७ ॥

कदाचिदास्थानवहिर्गतं तं
सखी सखीप्रीतिरसे वसन्तम् ।
लिलेख पत्रं विरहोक्तिपूर्णं
विहाय सर्व्वं विधुरेव तूर्णम् ॥ ७८ ॥

"विदेशिबन्धो ! कुशलं निरापत् ?
सुखप्रभाता क्षणदा नु तावत् ? ।
मनः प्रसन्नं नु न पापतापि
विडम्बना क्लेदयते न कापि ? ॥ ७९ ॥

स्थितं स्मृतेरध्वनि लण्ड*सख्यं
किमस्ति तद्यद्भवताधिरुह्यम् ? ।
यल्लण्डनं पार्थिवसन्निधानं
पश्यन्न संस्थासु न खिद्यमानम् † ॥ ८० ॥

* लण्डः—इंलण्डः (England. प्रथमसर्गस्य २१श्लोकस्य टीका द्रष्टव्या) । लण्डसख्यं स्मृतेरध्वनि अस्ति किम् इत्यन्वयः, इंलण्डे मया सह यत् पूर्व्वं सख्यं सम्पादितं, तदधुना स्मरसि किमिति तात्पर्य्यार्थः ।

† न खिद्यमानम्—इति काकुः । खिद्यमानमासे इति यावत् । संस्थासु—सभासु । पार्थिवस्य तव सन्निधानम् उपस्थितिमित्यर्थः । यल्लण्डनमिति—यत्र इंलण्डस्य लण्डनं नाम नगरमिति भावः, कर्तृपदमेतत् ।

विराजते प्राप्य च योऽद्य पार्थिवः
पदं भुवः सर्व्वदिवः स्थलादिव ।
व्यथां स जानाति न हन्त ! योषितः
कथं नु यो लण्डनभूचिरोषितः ? ॥ ८१ ॥

अथैकदाहं विरहेण दुर्ब्बला
पदाति-रानीतनदीतटस्थला ।
समानदुःखा निशि चक्रवाकिका
मया व्यलोकि च्युतशक्तिरेकिका ॥ ८२ ॥

विधाय तां क्रोड़वराम्बरान्तरे
मयैव रुद्धास्ति सुवर्णपिञ्जरे ।
ममेव तस्या विरहोऽस्ति दारुणः
प्रपीड्यते तेन च सा पुनः पुनः ॥ ८३ ॥

चरस्तु तस्याः प्रियकामया मया
न्ययोजि राजन् ! वरसङ्गमाशया ।
तया मम प्राणधनोपमानया
निनीयतेऽहः पुनराशिचिन्तया ॥ ८४ ॥

सा खेचरीयं प्रिय ! कातरेण
निवेदितार्त्तिर्बहुधा कृतेन ।
प्रियस्य राज्ञस्य सदा-विभातैः
प्रतीक्षते दर्शनमश्रुपातैः" ॥ ८५ ॥

ज्ञात्वा स पश्चादिति मर्त्यराजः
प्रस्थानमाज्ञाप्य समाजभाजः ।
प्रियान्तिकं प्रेष्य मनः पुरायं
पश्चाद्गतं तस्य चकार कायम् * ॥ ८६ ॥

इति कतिपयकालं लण्डनीये प्रदेशे
वसति सति महिष्या तन्नृपे सन्निवेशे ।
सुरभिसमयलक्ष्मीः † पुष्पितारामकुञ्जा
द्रुतपदमधितस्थौ स्वश्रिया रङ्गगुञ्जा ॥ ८७ ॥

इति श्रीश्रीश्वरीये विजयिनीकाव्ये विजयिनीविवाहो
नाम तृतीयः सर्गः ।

---

* "When Easter came (1844), the Prince left England, feeling that duty demanded his presence in Coburg." He *returned* in June 1844.

† वसन्तसमय इति यावत् ।





# चतुर्थः सर्गः ।



शुभविवाहविधेः परतस्तयो-
र्मुदमिवानयितुं जगति द्वयोः ।
अथ मधुः शुशुभे कुसुमत्विषा
समभिगृह्य दिनानि तथा निशाः * ॥ १ ॥

मलयपक्षसमीरणवीजितो
वनवधूकुसुमाञ्जलिपूजितः ।
दिशमुपेत्य जगौ खगपक्षिणां
रसनया स नयादिव दक्षिणाम् ॥ २ ॥

(युग्मकाम् ।)

* महाकाव्यानुरोधात् किञ्चिद्वसन्तवर्णनं क्रियते (१—११) । "The climate of London is generally mild and according to the seasons equable, with an *early spring* and a long autumn."—*Encyclopædia Britannica.*

स्फुटितपुष्पघटा च पदे पदे
सपदि षट्चरणद्युतिमादधे ।
ध्वनिरभून्मधुरं मधुमहने
सवयसां वयसामपि निर्जने ॥ ३ ॥

भ्रमरपक्षशतैः सहसाऽसितं
कुसुमितैश्च नगैः सुषमान्वितम् ।
मधुमहे * वृणुते स्म महेन्दिरा
रसमुदा समुदायवनं स्थिरा ॥ ४ ॥

उपचितः सकलर्त्तुनृपो यदा
तरुगणा मुमुचुश्छदनं तदा ।
अपि सदागतिना परिधावता
वनलतानलताण्डवनं गता ॥ ५ ॥

ध्वनिरभूत् किल कोकिल-कण्ठतः
कुसुमवृष्टिरपि द्रुमतस्ततः ।
मलयचन्दनगन्धचयोऽन्यतः
पवनतोऽवनतो वनतस्ततः † ॥ ६ ॥

---

* मधुमहे—मधूत्सवे । महेन्दिरा—वसन्तलक्ष्मीः ।

† चन्दनगन्धचयः पवनवेगवशात् ततः (प्रसृतः) सन्, अवनतः (मृदुतां नीतः) अभूदित्यर्थः । The scent grew mollified, as it spread far and wide.

न वचनं न कटाक्षपरिक्रिया
प्रसरणं स्वजनाञ्च वहिर्ह्रिया ।
युवतिवृन्दमहृष्यत तैर्जनैः
करधरैरधरैर्धितचुम्बनैः ॥ ७ ॥

इदमिवाह मधुः स्म वचः स्वयं
द्विरदवृंहितवाद्यरवैरयम् ।
"शशधरस्य करैर्भुवने तता
तुहिनता, हि नता रवि-तापता * ॥ ८ ॥

विधिकृपावशतो भव-निर्म्मिति-
स्तत इयाय शनैर्जनसंस्थितिः ।
स विदधे स्त्रियमेव जगन्निधिः
कमलिनी-मलिनीलकचां † विधिः ॥ ९ ॥

पुरुषतो रमणी-जठरे प्रजा-
वृद्धिरेऽद्य च तन्नियमाज्जनाः ।
शशिकलाविनिभेव च सा ‡ ततः
सकलया कलयया समपूर्य्यत ॥ १० ॥

---

* भुवने तुहिनता ततेति—वसन्तसमये चन्द्रस्य रत्युद्दीपककिरणाः प्रीतिजनकतां भजन्ते इति भावः । रवितापता नतेति—रविकिरणस्य च मृदुता जायते इति भावः । वाद्यरवैरित्यत्र सहार्थे तृतीया ।

† अलिवन्नील: कच:—इति स्त्रीपक्षे । अलिरेव नीलकचस्थानीयः—इति कमलिनीपक्षे । स्त्रीणामतिमृदुत्वादिद्योतनाय कमलिन्या शशिकलया च सह साहश्यमुक्तम् ।

‡ सा—पूर्व्वश्लोकोक्ता स्त्रीजातिरिति यावत् ।

विलसितः स च यद्वपुषीश्वरः
कुसुमनिर्म्मितपञ्चशरः स्मरः ।
स हि पुनर्म्रियते न रणच्युतो-
ऽप्यमरतोमरतो*ऽप्यथवान्यतः ॥ ११ ॥

दधति यं† हृदये त्रिदिवौकसः
स्वयमलक्ष्यगतिर्न च कुत्र सः ।
दिवितलेऽपि भुवोऽस्ति जलाशये
पुनरसौ नरसौधमुखालये" ॥ १२ ॥

(कलापकम् ।)

गिरमिमामभिधाय ततः शनै-
र्विहगकूजन-षट्पदगुञ्जनैः ।
मधुरियाय मुखे सहसा दिशा-
मतनुना,‡ तनुना ज्वलितोऽर्च्चिषा § ॥१३॥

* तोमरः—अस्त्रविशेषः। अथवा सुरनरादिभिस्तस्य न कापि क्षतिरिति भावः। यावत् मदननामा प्राणधातुविशेषः शरीरे तिष्ठति, न तावज्जीवननाशशङ्का इति तात्पर्य्यार्थः। चन्द्रकिरणस्य स्त्रीजातेश्च प्रशंसामुल्लिख्य ताभ्यामिदानीं स्मरस्य प्रशंसा गीयते इति द्रष्टव्यम् ।

† यं—स्मरमित्यर्थः ।

‡ अतनुना—स्मरेण सह इत्यर्थः ।

§ स्मरेण सह मधुः तनुना व्यापकेन अर्च्चिषा तेजसा ज्वलितः सन्, दिशां मुखे वचनपरम्पराभिः प्रादुर्बभूव इत्यर्थः। कूजनैरित्यत्र करणे तृतीया ।

जितहिमा न निदाघपरम्परा
जितनिदाघमभून्न हिमं त्वरा ।
द्वितयमेव तदा विनतं शनै-
रुभयतो*ऽभयतो† ददृशे जनैः ॥ १४ ॥

नवमुपान्तशिवारवमद्भुतं
द्रुतपदैः शशकैरपि विद्रुतम् ।
वनमभूत् ससरः करिखण्डितं
कदलवहलवद्द्रुम-मण्डितम् ॥ १५ ॥

वनवराहकुलैरुषितं समं
मृगमृगीगणगुम्फितमुत्तमम् ।
क्वचिदिवाकुलमुद्धत-मारुतै-
रनलवन्नलव‡न्मुखरं रुतैः ॥ १६ ॥

(युग्मकम् ।)

सुरुचिरं कलहंसगणावृतं
सरस-सारस-सारचमत्कृतम् ।
विलमपि द्रुमकुञ्जविराजितं
कमलवन्मलवज्जलवर्ज्जितम् ॥ १७ ॥

* उभयतः इति—अनादरे षष्ठी ; ग्रीष्मसमयं शीतसमयञ्चानादृत्येत्यर्थः ।

† अभयतः इति—हेत्वर्थे पञ्चमी । अतिप्रबलयोः शीतग्रीष्मयोः प्रारम्भकाले यथा लोकः, "अतिदारुणोऽयमृतुरागच्छतीति" भयाकुलो भवति, सकलसुखप्रदस्य वसन्तस्य प्रारम्भे तु न तथा इति अभयत इत्युक्तम् ।

‡ मृगैः सह मृग्यः इत्येव समासः कार्य्यः । नलः—स्वरः, वाद्यरवमित्यर्थः ।

तरुगणा नवपल्लवधारिणः
खगगणाश्च निकुञ्जविहारिणः ।
सुरभिपुष्परुचा भृशमुन्नते
स्मरसखे रसखेलनतां गते ॥ १८ ॥

यदुदये सति भङ्गमितं तम-
स्त*मभिवीक्ष्य रथे सविहङ्गमः† ।
निजदृशामिषमैक्षत भार्य्यया
खगगणो गगनोपरिचर्य्यया ॥ १९ ॥

तत इतो भ्रमिता वनधेनवः
पवनवेगचला इव वेणवः ।
अतिबभौ पशुपंक्तिरलङ्कृता
सचमरा च मरालगणान्विता ॥ २० ॥

मधुरमेव चुकूज पिकीं पिकः
कुवचनं स्म शृणोति न चापि कः ।
रतिकृतं प्रियया सुमुखे स्मरे
क कलहं कलहंससरोवरे ? ॥ २१ ॥

* तं—सूर्य्यमित्यर्थः ।    † सविहङ्गमः—सश्लोकः खगगण इति यावत् ।

विषयिणः सुखभोगसमीहया
विविधवर्त्मनि ते विहितोद्यमाः।
मधुदिनं व्यनयन् नृमुदावहं
परमया रमया* समराचरहम् ॥ २२ ॥

शुभदिनं खलु तच्च च दुर्दिनं
यदभवन्मधुना विलसत्क्षणम्।
प्रणयिना वनिताः सह सङ्गता
मुमुदिरे मुदिरेण† तडिल्लताः ॥ २३ ॥

विरचयन् भणितिञ्च पुरातनीं
प्रियवियोगभिदे धृत-तर्ज्जनीम्।
मधुरसौ गतनिद्रतमस्विनीं
मदयते दयते स्म न कामिनीम् ॥ २४ ॥

"न हि शठेन हितो वचनव्यय-
स्त्यज ततोऽनुनयं वितथाशय!।
त्वमिह धूर्त्त-पथे परया कृतो‡
रसिकयासि कयाप्यनुलोभितः" ॥ २५ ॥

* रमा—प्रिया नारीत्यर्थः। † मुदिरेण—मेघेन इत्यर्थः।
‡ धूर्त्तपथे—कापट्यमार्गे। अपरया कयापि त्वमनुलोभितः सन् कापट्य-मार्गे कृतोऽसि इत्यन्वयः। वितथाशयेति—सम्बोधनपदम्।

कमिति कापि विगर्ह्य च खण्डिता
सपदि मानविधावथ पण्डिता ।
बत ! निरास पतिं विगताशना
कपटतः पटतः* पिहितानना ॥ २६ ॥

(युग्मकम् ।)

अवचसां चिरमानमखण्डयत्
कुसुम-केलि-कृतं कलहं जयत् ।
मृगदृशो मृदु-कौशलतः सृतं
कवलतो बलतो वचनामृतम्† ॥ २७ ॥

विपिनभू रचितापणभूवने
फलि-फलैः सदलैश्च नृ-वीक्षणे ।
अपि सपर्ण-गुवाक-चयावृता
समधुका‡ मधुकाम्रफलावृता§ ॥ २८ ॥

द्रुतमभूद्वनभूर्घन-शाद्वला
निविड़केशचयेव नवाबला ।
कुसुम-सौरभमुन्मिषितान्नगात्
पवनतो वनतो वहिरन्वगात् ॥ २९ ॥

---

* पटतः—वस्त्रेण ।

† मृगदृशः कवलात् (मुखात्) निःसृतं वचनामृतं, कलहजयानन्तरम्, अभिमानवतां प्रियायां मानं बलेन अखण्डयत् इत्यन्वयरीतिः ।

‡ मधुकं—यष्टिका, यष्टिमधुकिति भाषा । § मधुकाम्रेत्यादि—इवार्थे कन्प्रत्ययः । विपिनभूमिरापणभूमिरिव रचिता आसीदित्यर्थः ।

न हि विधुर्विसिनीं निशि हासयेत्
अहनि तद्धृदि किं मुदमानयेत् ? ।
इति रुषेव तदा न चकार किं
नृसविता सवितारकमेव विम् ? * ॥ ३० ॥

मधुनिशा किमियं सकलोत्तमा ?
किमुत तस्य रमा स्फुटचन्द्रमाः ? ।
किमुत वा त्रिदिवात् सुषमोन्नता
नवसुधा वसुधातलमागता ? ॥ ३१ ॥

लसद्विहङ्गमागमागमाप माधवीच्छवि†-
स्ततो धरा-धराधरा ध्वनत्पिकाधरा बभुः‡ ।
मधूत्थिते कुतूहले, मधुव्रतज्जलस्थले
बभाष्टतुर्यदा मधु,र्न के मधून्नतिं दधुः ? ॥ ३२ ॥

इति श्रियोऽम्बुधेः स्वके तटे मनोजनाटके
मधूद्भवे महोत्सवे प्रवर्त्तिते भवे नवे ।
स्वयञ्च गायको मधुर्नटीव कोकिलावधू-
र्विदूषको भवन्नलिस्ततान तत्कथावलीः ॥ ३३ ॥

* विम्—गगनमित्यर्थः ।

† माधवीच्छविः वसन्तशोभा, लसन् विहङ्गमानां पक्षिणाम् आगमः समागमो यत्र ईदृशम् अगं वृक्षम् आप इत्यर्थः ।

‡ धरायाः पृथिव्याः ये धराधराः पर्व्वताः ते, ध्वनन्तः पिकानां पक्षिणाम् अधराः अधरोष्ठाः यत्र तादृशा बभुः, पिकध्वनिभृत इति यावत् बभुः इत्यर्थः । न केवलं वृक्षेषु पक्षिसमागमः, पर्व्वता अपि पक्षिकूजनशब्दिता बभूवुरिति तात्पर्य्यार्थः ।

इत्यमुच्चसुरभेः समन्ततः
सा*ऽनुभूय च मुदं वसन्ततः ।
तेन च प्रणयिना समं वरा
हर्षमाप बहुधा हृहत्तरा ॥ ३४ ॥

यानरत्नवरवाहनादिभिः
सज्जितैः क्वचिदथाश्वसादिभिः ।
तत्र तत्र विजहार निर्ज्जने
सा प्रियेण सह पुष्पिते वने ॥ ३५ ॥

तेन सार्द्धमबला वरान्तरा
स्वप्रियेण यशसा विकस्वरा ।
दिद्युते कमलकामिनीव सा
भास्करेण कलिता दयाम्भसा ॥ ३६ ॥

तं कदाचिदकृतावनेजनं
गोचरत्वकमुपादिशत् जनम् ।
राज्यरूपनिगड़े स्थितं न† तं
सा बभार विनयादुपानतम् ? ॥ ३७ ॥

* सा—विजेयिनीत्यर्थः । अथेदानीं तयोर्दम्पत्योर्गार्हस्थ्यसुखादिकं वर्ण्यते (३४—४७)।

† शिरश्चालने नञ् ।

आफलाप्तिसमयाच्च तं नता
सा पुपोष परमां मुदं गता ।
एकचक्षुरपतत् तदीक्षणे
मातुरन्यदपतत् प्रणेक्षणे ॥ ३८ ॥

वामपार्श्वपरिरज्यमानया
सोऽप्यभूदथ तया वयःस्थया ।
भूविभूतिततिरञ्जितत्विषा
भूमहेन्द्र इव कम्पितद्विषा ॥ ३९ ॥

राज्यवासिमनुजोद्भवैर्नवैः
सा सुचारुचरिता महोत्सवैः ।
गेहिकृत्यमकरोत् प्रियङ्गता
स्वप्रियेण सहिता तदा सता ॥ ४० ॥

अस्त-विप्रिय-कथा-विधुन्तुदा
चन्द्रमूर्त्तिरिव तेन सा मुदा ।
सन्निशम्य गृह-पक्षि-काकलीः
सन्निनाय रजनी-क्षणावलीः ॥ ४१ ॥

एकयानगमनादिका क्रिया
सर्व्वथैव वल्लभे च तत्प्रिया।
तस्य साधुहृदयस्य तोषणे
सा सदा नियुयुजे च भूषणे ॥ ४२ ॥

द्योतिता विविध-शिल्पि-साधितै-
र्भूरिवस्तुनिकरैः सुशोभितैः।
स्वप्रियेण रचिता प्रदर्शनी *
कैः श्रुता न भुवि लोक-हर्षणी ? ॥ ४३ ॥

आत्मगुप्ति-परवेशधारणै-
रुत्सवैः † सकल-शिल्पितोषणैः।
रम्यताण्डवसदःसु सा शनैः
प्रीतिमाप मिलिता च तैर्जनैः ॥ ४४ ॥

* This refers to the Great Exhibition of 1851.

"The Grand Exhibition of 1851 *originated* in a suggestion the Prince (Albert) threw out at a meeting of the Society of Arts, and owed the greater part of its success to his intelligent and unwearied efforts."—*Encyclopædia Britannica.*

"The Exhibition had 4 great departments,—raw material, machinery, manufactures, fine arts,—which were subdivided into 30 classes."—*Ibid.*

† आत्मगुप्तैत्यादिना विजयिनी-सम्पादित-नृत्य-गोष्ठी (Costume-balls) वर्णिता।

"In order to revive trade in London, dinners, concerts and balls were frequently given and on the 7th of May 1842 with the same object, a grand *Costume-ball* was held in Buckingham Palace. At this, the Queen appeared as Queen Philippa and the Prince as Edward III.—*Holme's Queen Victoria.*

Such another ball was given in 1851.

ग्राम-देश-नगरादि-वीक्षणैः*-
भूरि-पर्य्यटन-सञ्चितां शनैः ।
लोक-वृत्ति-चरितेष्वभिज्ञता-
माप सा नियतभर्तृसङ्गता ॥ ४५ ॥

यत्र यत्र जयिनीसमागम-
स्तत्र तत्र स बभावरिन्दमः ।
यत्र यत्र लतिका प्रसूनवाट्†
तत्र तत्र सगतिर्हि भृङ्गराट् ॥ ४६ ॥

सानुकूलविधिनाथ निर्म्मिता
व्यद्युतत् सुतसुतादिभिर्वृता ।
एकयष्टिरपि कानने स्थिता
वल्लरीव फलपल्लवान्विता ॥ ४७ ॥

नापि काचिदिह भारतेऽङ्गना
तादृशैः सुनियमैः सुसाधना ।
प्राक् शशास वसुधां कृतादरा
यादृशीयमभिवीक्षितान्तरा‡ ॥ ४८ ॥

* This refers to the frequent *travels* and *tours* of the Queen with the Prince to Ireland (1849), Scotland (1842), Paris (1855), Germany (1862) and other places.

† प्रसूनानि वहतीति विण्प्रत्ययः ।

‡ इदानीं विजयिन्या भारतशासनप्रथा (Administration of India by the Crown) वर्ण्यते (४८—७१)। अन्तरा—मध्यसमये इत्यर्थः। "India in its long cycles, has had no such Empress tender-hearted,

किञ्च, कालिमनि मानसेऽवटे
द्रोहितां दधति भारते भटे* ।
राज्यरक्षणविधौ सुघोषणां†
साकरोदुदितसर्व्वतोषणाम् ॥ ४९ ॥

अग्रहीन्न नियमाधिकं करं‡
सोपपादितजनार्त्तिसङ्करम् ।
तं न्यवारयत मङ्गलालया
पत्रबद्ध§मकरोच्च सहृया ॥ ५० ॥

दास्यतीह न च यः करं रवौ
संस्थिते सति भुवो जनोऽथ वौ ।
तत्करात् पर-करं क्षतक्षतिः
स्वैरिणीव बत भूर्गमिष्यति¶ ॥ ५१ ॥

---

large-minded, just, humane. the loving parent of her subjects of every race and clime."—*Extract from the Viceroy's Speech at the Imperial Legislative Council.*

* This refers to the Indian Mutiny of 1857. अवटे—गर्त्ते इत्यर्थः ।

† सुघोषणा—"In 1858, a Proclamation was issued in India in the name of the Queen. This Proclamation was regarded as the Magna Charta of India." "It was translated into all the Vernaculars and read aloud in every district."

‡ This refers to the Permanent Settlement of the land-revenue of Bengal.

§ पत्रबद्धम्—विधिबद्धमित्यर्थः । Compare :—"Due regard would be paid to the *ancient* rights, ways and customs of India."—*Extract from the Queen's Proclamation of* 1858.

¶ This refers to the Sale of land under Act X of 1859 and sub-

एवमाद्युक्ततिक्तमिश्रितं
कार्य्यबन्धमसृजत् समुच्छ्रितम्।
अम्बु ते कटु पिबन्तु वारिधे-
र्लङ्घका जगति येऽत्र तद्-विधेः। * ॥ ५२ ॥

धर्म्मपद्धतिषु यस्य या मतिः
सा तथास्तु भुवि तस्य, न क्षतिः।
मादृशामिव न योषितां क्वचित्
धर्म्मवारणकलङ्किताऽस्ति चित् † ॥ ५३ ॥

एवमादिनियमानघोषयत्
सा सतां हृदयमप्यतोषयत्।
आत्मबद्धनियमं समागता
विस्तरेण यशसाऽभवत्तता ‡ ॥ ५४ ॥

(युग्मकम्।)

---

sequent Acts. मत्कारेत्यादि—एकजनस्य हस्तात् स्खलिता भूरन्यहस्तं गच्छति क्रयादिना। द्यौ—आकाशे इत्यर्थः।

* It is a translation of the well-known Bengali *Proverb*—"Let him drink the brine-waters of the seven Seas."

† This śloka alludes to the *Religious Toleration* of the Queen. "The Proclamation (of 1858) assured the people that their Caste or religious faith, the British Government had no desire to tamper with."

‡ तता—प्रथितेत्यर्थः।

भारतादिपरिरक्षणे वरा
शिक्षिता युयुजिरे नृणां वराः ।
ते गमागम-विधानतत्पराः
पालयन्ति भुवमुन्नतान्तराः * ॥ ५५ ॥

आत्मशक्तिमभियुज्य मानवे
विश्व-विश्वसन-भूमिका भवे ।
अप्यनेकमिव सैकमानतं
भारतं प्रति समर्पयच्च तम् † ॥ ५६ ॥

साऽपरानपि ‡ जगौ जनेश्वरी
सन्नतान् करुणया शुभङ्करी ।
"भारतस्य च सभां यियासवः !
क्षेममस्तु भवतां हितैषिवः ! ॥ ५७ ॥

---

* अधुना भारतशासनार्थं राजपुरुष(Judicial and Executive Officers)-नियोगादिकं कथयति (५५—५८) ।

† सर्व्व-प्रधान-शासकमुद्दिश्य इदमभिहितम् । "From this time forward, the *Governor-General* has been the representative of the British Sovereign in India and has been styled Viceroy and Governor-General."—*Mukerjee's History of India.*

‡ अन्यान् राजपुरुषान् (Other Officers) उद्दिश्यैतदभिहितम् ।

As an instance of this, the following may be read with interest :— "Only three days before I left England to come here, I had the high honour of seeing and conversing with

तत्र सन्ति सरला: प्रजाव्रजा-
स्ते च मे सुतनया इवात्मजा: ।
पालयन्तु ननु तानवेक्षया
तेषु भातु भवतां सदा दया" ॥ ५८ ॥

(युग्मकम् ।)

भारतेन्द्रपदतां गता जना:
प्राड्विवाकगुणरञ्जितासना: ।
प्राप्य पोतनिकरेण भारतं
कार्य्यमैक्षिषत तेऽप्यनारतम् ॥ ५९ ॥

तेऽद्य* भान्ति नगराद्बहिर्गता
ग्रामवासशुभखण्डनोद्यता: ।
शिक्षिता नृपतिकार्य्यदीक्षिता
दु:खितान् पृथगवन्ति रक्षिता: ॥ ६० ॥

---

Her Majesty. Her Majesty spoke about India and she enjoined me to observe to her subjects a disposition similar to that which was ever manifested by herself. That was the last injunction given in such simple words as a *mother* might use to one to whose care she was confiding her *children*."—*Extract from the Speech of His Excellency the Governor of Madras in a Condolence Meeting held in Madras on 1st February* 1901.

* इदानीं राज्ञी-विनियुक्तान् भारतीय-राजपुरुषान् (Officers) वर्णयति (५०—६४)।

दस्यवो भुवि विगर्हितक्रिया-
स्तस्करादिभि*रलञ्च यद्भिया†।
भारतेऽत्र विपुलार्थकाननान्
दूरतः परिहरन्त्यहो जनान्॥ ६१॥

ते प्रयान्ति सदसि प्रजाञ्जलिं
मौलिकृष्टकरपिण्डिताङ्गुलिम्।
वक्तृताभिरपि भान्ति मानिताः
शत्रुषु स्वसय एव शाणिताः॥ ६२॥

शिष्टपालन-सुदुष्टनिग्रहे
भान्ति येऽत्र यशसारिविग्रहे।
ये भ्रमन्ति, यदि ते न चागता
मात्स्यनीति‡रभविष्यदातता॥ ६३॥

भारतादिषु सुभिक्षहेतवे
ये त्यजन्ति निजमङ्गलं भवे।
आर्त्तरक्षणनिकुञ्जकाननं
स्थापयन्ति भिषगौच्चितानम्§॥ ६४॥

---

* सहार्थे तृतीया।

† यद्भिया—येषां राज्ञा नियुक्तानां राजपुरुषाणां (Officers) भिया। "The days of the Thugs, Pindaris, Robbers and Bargis are gone."

‡ मात्स्यनीतिश्च—परस्परं भक्षयन्तो दुर्बलान् बलवत्तराः इत्यादि।

§ Vide also Canto I., 67 and 45—49.

अद्य चापि जयिनीकृतप्रथा *
भारते परिविधूय नृव्यथाः ।
प्राड्विवाकविषये जले स्थले
साऽच्युता जयति भूमिमण्डले ॥ ६५ ॥
यानवाष्परथसङ्कुलादिभिः
संस्कृतैर्नलमुखैर्जलादिभिः † ।
सोपचारमुपकारमङ्गलं
दूरयत्यशुभदुष्टजङ्गलम् ॥ ६६ ॥
वाहिनी च जयनद्धकेतना
ह्रस्वदीर्घपुरुषा ससाधना ।
रक्षतीह विभु‡वाग्वशंवदा
भारतं तुरगविक्रमोन्मदा ॥ ६७ ॥
धावतीह भुवि लौहसम्पदा
सत्वर-ग्रह-विधौ शतह्रदा§ ।
के च नो हृदयरंहसा समं
यद्विवाद¶मनुमेनिरेऽश्रमम् ? ॥ ६८ ॥

* इदानीं विजयिनीप्रवर्त्तितां भारतस्य विविधहितानुष्ठानपद्धतिं (Benefits of the British Rule) वर्णयति (६५—७१) । (Vide also Canto XII, 17—32.)

† Vide also Canto I., 66.

‡ विभुः—सेनापतिप्रभृति ।

§ "The country has been covered with a net-work of *Railways* and *Telegraph*-lines." (Vide Canto I., 66).

¶ विवादः—तडिन्मनसोः कोऽग्रगामीति वितर्क इत्यर्थः । "अश्रम"मिति क्रियाविशेषणम् ।

"युनिभार्सिटि"रशेष-शिक्षया
वेदकाव्यगणितादिदीक्षया।
निर्मिता जगति हन्नये सुधा
ज्ञानरत्नखचिताश्च यद्‌बुधाः * ॥ ६९ ॥
"हाइकोर्ट"मसृजच्च शासनं
येन चाद्य विपदां विनाशनम्।
यत्र धर्म्म-सुविचार-पद्धति-
र्वारयत्यशुभसन्ततेर्गतीः † ॥ ७० ॥
"लेजि"-नाम-परिषत्सु ‡ सादरं
भारतीयमभिमन्त्र्य सत्वरम्।
विघ्नजालमकरोत् सदप्यसत्
सत्यकालदिवसञ्च सासृजत् ॥ ७१ ॥
विंशमेकयुतमेव वत्सरं
गेहसख्यममुना समं वरम्।
सानुभूय गृह-नीड़-कोकिला
कीर्त्तिमापदतुलामनाविला ॥ ७२ ॥

* "*Universities* were founded (in 1857) in Calcutta, Madras and Bombay with 'The Advancement of Learning' as their motto." - *Sastri's History of India* (Vide also Canto I., 64 and 67).

† "The Supreme Court and the Sudder Dewani Adalat were abolished and the *High Court* was established in their place" (in 1862 and 1865).—*Ibid.*

‡ लेजि-नाम-परिषत्सु—The Legislative Councils. "Provisions were

सा भवेऽत्र सुखदुःखसङ्कुले
जन्ममृत्युजरया विसंष्ठुले ।
अस्मरङ्गमितमुत्तमां गतिं
कालधर्मकलितं प्रिया पतिम् * ॥ ७३ ॥

नो रराज विषये गतक्षमा
सा बभूव सहसा विसंयमा ।
आयतौ च बहुशोकसङ्गमा †
यामिनीव सतमोघनागमा ॥ ७४ ॥

किं करोतु विधिना हतावशा
सन्ताप मलिनातिनीरसा ।
अर्द्धमङ्गमगमत् विनष्टतां ‡
प्राप सा सपदि दीर्घकष्टताम् ॥ ७५ ॥

---

made for admitting three *native* members to the Imperial Legislative Council (in 1861)." – *Ibid.*

* The Prince-Consort died on the 14th December 1861.

† आयतिरुत्तरकालः । "Year after year the Queen seemed to grow more and more *solitary* ; and at last the death of her son, the slow dying of her daughter, the death of her grandson in the wars—proved too much for her."—*Extract from the Metropolitan's Address at the State Memorial Service.*

‡ पतिवियोगादिदमुक्तम् । पतिर्भार्य्याया अर्द्धाङ्गहर इति प्रसिद्धः । "विधिना कृत-मर्द्धवैशसम्" इति कुमारसम्भवे कालिदासः ।

पुत्त्रपौत्त्रयुमया तयाऽनया
प्रोच्यतामगतबाष्पुदासया ।
अभ्यधारि भुवि कष्टदा क्षिति-
नष्टरागरसकोषसंस्कृतिः ॥ ७६ ॥

सा रहस्य विललाप मोहिता
बन्धुबान्धवहशस्तिरोहिता ।
व्यादिदेश भुजिषु* नैव रन्धनं
नागमच्च हृदि धैर्य्यबन्धनम् ॥ ७७ ॥

भर्त्तुरन्त्यपरिसेवनागतं
सैन्यहृन्दमभितः स्थितं नतम् ।
व्याजहार कुररीव सा स्वयं
"कष्टमद्य विधिना गता वयम् ॥ ७८ ॥

कोऽद्य भाति विषमे स्थितो जनः
प्राणसंशयकथाविचेतनः ।
आत्मरोषकृततुङ्गसाहसं
व्यास्मरामि वत तं कृतागसम् † ॥ ७९ ॥

* भुजिषु—भोजनकालेषु ; विषये सप्तमी ।

† "Her Majesty had already learned that the only anodyne to personal grief is sympathy with the sorrows of others."—*Holme's Queen Victoria.*

विद्युतामपि धृतिर्घटोदरे
धारणञ्च मरुतां कलान्तरे* ।
प्राणनामपवनस्य निर्गमा-
न्नैव वारयितुमत्र के क्षमाः" ॥ ८० ॥

शोकचिह्नसहितास्ततो जना-
स्तां समीयुरभितो नताननाः ।
ते विलुप्तवचनाश्च जङ्गमा
रात्रिकाल इव भूविहङ्गमाः ॥ ८१ ॥

अन्धमन्धनयना इवाखिला-
स्तां विदीर्णमनसं शुचाविलाः ।
नैव बोधयितुमञ्जसाऽभवं-
स्ते च शोकजलधिं गतां नवम् ॥ ८२ ॥

दूरवारितपिपीलिकादिकं
तद्वपुः शवतया गताधिकम्† ।
निन्युरेव पितृकाननं नराः‡
शोकवह्निविधुरीकृतान्तराः ॥ ८३ ॥

* कलं—यन्त्रादि । † आधिः—मानसी व्यथा ।

‡ पितृकाननं—श्मशानस्थलनाम । "The funeral of the Prince-Consort took place on Monday, the 23rd of December 1861 in St. George's Chapel. On the 18th December 1862, the remains of the Prince-Consort were transferred from St. George's Chapel to the Mausoleum which had just been built in the grounds of Frogmore."—*Holme's Queen Victoria.*

रत्नराजिपरिराजिताम्बरे
सन्निवेश्य वरमञ्जुषान्तरे * ।
आत्मजादिसहिता च सन्नता
तं पदातिरभवच्च सागता ॥ ८४ ॥

तत्प्रयाणमवितर्क्यमद्भुतं
निन्दकैरपि बभूव यत् स्तुतम् ।
युड्‌याचिकमिवाम्बरोज्ज्वलं †
वाद्यडम्बरनिनादितस्थलम् ॥ ८५ ॥

गृह्यते स्म न जनान्तिके चपा
सर्व्वदा विहिततत्कथाजपा ‡ ।
सात्मसन्ततिमभीच्य सादरं
शान्तिमाप शनकैस्ततः परम् ॥ ८६ ॥

---

* मञ्जुषा—Coffin.

† "The azure ceiling is powdered with *gold stars* and divided into panels by bands of miniature gilt *angels* rising one above the other to the roof. In the middle of the richly variegated marble pavement is a massive Sarcophagus containing the coffin of the Prince-Consort, a white marble recumbent statue of whom, clad in his *Field-Marshal's Uniform* and wearing the mantle of the Order of the Garter, lies on right lid."—अतएव युड्‌याचिकमिवाम्बरोज्ज्वलमित्युक्तम् । याचिकमिति प्रयोजनार्थे ठञ्प्रत्ययः ।

‡ तत्कथा—पत्युर्गुणग्रामादि । "For 40 years there has scarcely been a day when she has not prayed for reunion with her husband."
—*Metropolitan's Speech.*

आत्मजस्य च विवाहवार्त्तया *
रज्यमानमनसा तयैतया ।
स्थैर्य्यमस्तमपि तत् समाहृतं
राज्यशासनविधावुरीकृतम् ॥ ८७ ॥

राजधर्म्मपरिपालनोद्यता
छच्छतः खलु शुचो वहिर्गता ।
दीर्घकालपरिसुप्तमानसा
प्राग्वदेव भुवनं शशास सा † ॥ ८८ ॥

वर्द्धितो न च करः प्रजाऽप्रियो ‡
नैव नैव हरणं नृपश्रियः ‡ ।
इत्यभीक्ष्य, भुवि तत्कथां जनाः
संजगुः सदसि विस्मिताननाः ॥ ८९ ॥

* This alludes to the marriage of the Prince of Wales with the Princess Alexandra of Denmark, 10th March, 1863. (Vide Canto VIII).

† "The Queen, strengthened by the cherished example of the loving counsellor she had lost, resolutely overcame the depression of her inconsolable grief and fulfilled those arduous duties, the performance of which she regarded as a sacred trust."—*Holme's Queen Victoria.*

‡ उभयत्र तयेति शेषः ।

अद्य चापि सततं शतानने-
स्तत्कथैव भुवि गीयते जनैः ।
विस्मरिष्यति न तां * कदाचन
क्षौणि-मध्य-वसतां सतां मनः ॥ ९० ॥

सूपकारनिरताश्च ये नृपाः
सख्यमेत्य भुवि लब्ध-तत्कृपाः ।
आकुमार-गुण-कीर्त्तनोज्ज्वलं
ते जगुश्चरित-गीत-मङ्गलम् † ॥ ९१ ॥

सस्मरुद्युति-भृतश्च तद्दयां
मूर्त्तिकाञ्च भुवि लुप्तदर्शनयाम् ।
चक्रुरप्यभिमतं तदुत्सवं ‡
स्वेच्छया व्ययित-भूरि-वैभवम् ॥ ९२ ॥

(युग्मकम् ।)

---

* तां—तत्कथामित्यर्थः ।    † तस्या इति शेषः ।

‡ उत्सवं——पञ्चाशद्वर्ष-निर्व्विघ्न-राज्य-शासन-जनित-जुबिली-संज्ञकोत्सवादिकमित्यर्थः। "Not only were all living *monarchs*, her friends or kinsmen, they were in a sense her pupils. * * * By her tact, her knowledge, her simple authority, she imposed her view of Sovereignity on Europe, until all questions which affect the duties and privileges of Kingship, were referred to and answered by her."—*Extract from "The Mentor of Kings" which appeared in the* STATESMAN, *February* 15, 1901.

निशम्य तस्याश्चरितञ्च रम्यं
नृपा ययुस्तद्भवनं सुहर्म्यम् * ।
सातिथ्यसत्कारनिवेदनेन
तेभ्योऽधिकासीद्भुवि तेन तेन ॥ ६३ ॥
जले स्थले सैन्यदले सुहृद्बले
तथा प्रजानां समुदायमङ्गले ।
यशोभृदर्डारशतं † चकार या
जनप्रियं साद्भुतपार्थिवांशजा ॥ ६४ ॥
तथैव चान्यैर्विविधैरुपायै-
र्बहूपकारैर्बहुभिश्च दायैः ।
शुभं प्रभूतं प्रचकार माता ;
न तादृशी स्त्री भुवि कुत्र जाता ॥ ६५ ॥
या हि सर्व्व-ललना-शिरोमणि-
श्चारु-चन्द्र-सुषमा यशः-खनिः ।
मूर्त्तिमत्यजनि सेति विश्रुता
नापि भारत-जनाच्चिविद्रुता ॥ ६६ ॥

* The King of Prussia visited England in 1842 &c., The Emperor of Russia in 1844 and 1855, The King of the French in 1843, Sultan Abdul Aziz in 1867 &c. &c. &c.

† This śloka refers to the various "Orders" instituted during the Queen's reign, such as :—"Order of Victoria and Albert" (1862), "The Victoria Cross" (1856), "The Distinguished Service Order" (1886), "The Royal Victorian Order," (1896) &c. &c. &c.

लण्डनेऽपि खलु या यशस्तता
तां पुनर्ददृशिरे न भारताः* ।
ईश्वरीक्षण-विधौ हि वञ्चिताः
के न वा वहिरदृष्टतः स्थिताः ?† ॥ ९७ ॥

अद्य चास्ति ननु सा हितैषिणी
लण्डने नभसि वा प्रजा-मणिः ।
नास्तिवादि-गण-वाद-खण्डिता,
नेश्वरी जगदसत्य-पिण्डिता‡ ॥ ९८ ॥

आत्मार्य्याप्यबलापि भारतपुरादारात् स्थितापि स्वयं
येयं भरिबला प्रविष्टकमला मान्या जगत्सन्निधौ ।
या कीर्त्या भुवनार्णवेन्दुकलिकेवैकाम्बराधिष्ठिता
सर्व्वत्रैव जड़ाजड़े समकरे संहृत्य शत्रोर्भयम् ॥ ९९ ॥

इति श्रीश्रीश्वरीये विजयिनीकाव्ये विजयिन्या
गृहधर्म्मपालन-भारतशासन-पतिवियोगादि-
वर्णनो नाम चतुर्थः सर्गः ।

---

* भारताः—"जनपदे लुप्" इत्यनेन तद्धितप्रत्ययस्य लोपः । "लुपि युक्तवद्व्यक्तिवचने" इति बहुवचनञ्च । † शुभादृष्टतो वहिर्भूता जना ईश्वरीं द्रष्टुं न क्षमा इत्यर्थः ।

‡ अद्यापि सा लण्डने अस्तीति भावः । मृता कथं संस्थितेति संशये आह नास्तीत्यादि । नास्तिकवादखण्डिता ईश्वरी जगति क्व असत्यं मिथ्यावाक्यं तेन पिण्डिता भवति ? इति भावः । ईश्वरी तु न खण्डिता नापि मिथ्यावाक्-पिण्डिता भवतीति तात्पर्य्यार्थः ।





# पञ्चमः सर्गः ।

विलसति वरखनिकाफरिका * ।
नवनवहीरककाञ्चनमणिका ॥
खनिकमलानन-
पङ्कजवीक्षण-
रसमदिरारसिकैरपरैः ।
उपवनकुञ्जं †
विलसितगुञ्जं
जटिलितभावमुपैति नरैः ॥ १ ॥
लवणजलधिजल-
मुन्नतभूतल-
भेदि भवद्विपुलं सदिवालम् ।
उपहितयत्नं
खनिमणिरत्नं
दर्शयते ‡ किमु चारु विशालम् ? ॥ २ ॥

---

* Africa. अधुना एकादशश्लोकं यावत् आफरिकां वर्णयति (१—११) ।

† यस्या आफरिकाया इति शेषः ।

‡ दर्शयते—इत्यस्य कर्तृपदं—जलधिजलं, कर्मपदं—रत्नमिति स्पष्टार्थः ।

इति जनगीतं
श्रुतिपुटनीतं
त्वरितमभूद्भुवने किल पूर्व्वम् ।
जातमकस्मात्
तत्पद*मस्मात्
जनगणपदभरविदलितदूर्व्वम् ॥ ३ ॥

विलसितभूते-
र्हीरकसूते-
स्तांश्च निरीक्ष्य मदः खलु सर्व्वे ।
निरसितगदनाः
परिनतवदनाः
भान्ति न कोऽपि पुनर्धनगर्व्वैः ॥ ४ ॥

विलसति वरखनिकाफरिका ।
नवनवहीरककाञ्चनमणिका ॥

---

* तत्पदम्—आफरिकेति भावः । "The flotation of the Sheba mine, and the fabulous reports from Barbarton, soon attracted a large population to the Country. The State-revenue rose by leaps and bounds."—*Rise and fall of Krugerism.*

"The gold-fields of Transvaal Republic and of the country are numerous." "The diamond-fields in the districts of the Vaal and Orange rivers north of the Cape-Colony are now steadily worked."—*Encyclopædia Britannica.*

खनिमणेः किरणैरिव सन्ततै-
र्विपिनधूलिघटाभ्र-वहिर्गतैः * ।
विधुकलाधवलेव रसातलात्
विजयते जय-तेज-इता† चलात् ॥ ५ ॥

मणिकदम्बकदम्बरजोभ्रमद्-
भ्रमरताण्डवनोत्सवमादधत् ।
न नयते पथि कं पथिकं जनं
मुखरितं वयसा खनि-काननम् ? ॥ ६ ॥

इयमवाग्वनमानुषसङ्गता ‡
सुर-नरानर-वानर-सन्तता ।
परिहृतापि च पल्वलैर्झषै-
र्लवण-वारिभवैर्विलसद्रसैः § ॥ ७ ॥

---

* "Africa appears to be a land of *dense* tropical *forest.* Into these forests, the sun though vertical cannot penetrate, excepting by sending down at mid-day thin pencils of rays into the gloom."—*Encyclopedia Britannica.*

† जय-तेज-इता—इता प्राप्ता इत्यर्थः, अतितेजस्विनीति भावः ।

‡ "The most important members are the Chimpanzee and Gorilla. Baboons and Mandrils are peculiar to Africa."—*Ibid.*

§ "In the course of time, more discoveries were made, *peculiar fishes*, crabs, prawns,—in fact a number of creatures all suggesting that their ancestors had been *marine.*"—*From an article in the Statesman, February* 3, 1901.

अधोभुजङ्गाकृतिकेभशुण्डवत्
तदूर्द्ध्वदेशेन्दुकलाख्यखण्डवत् ।
मुखं दधाना खलु या प्रशस्यते
भुजङ्ग-कन्या * भुवि साच दृश्यते ॥ ८ ॥

अपि यदुत्तरदिग् गिरिदुर्गमा
कुसुमजातमधुव्रतसङ्गमा ।
निधुवनं भजते प्रिययान्वितः
सुरगणो गगनादिव यामितः ॥ ९ ॥

स्फुरति भूमिरियं, सुषमाखलीं
खधनगर्व्वभृतां खनिमण्डलीम् ।
अवटतो दधतीव च या गदां ;
द्युतिमती प्रभयातुलसम्पदाम् † ॥ १० ॥

(कुलकम् ।)

षड़ृतुललितदेशान् यो हसित्वा सुदेशः
खनिकिरणकलाभिः श्याम ‡ एको विशेषः ।
लसति ललितवामः § शीतवर्षाभिरामः
कुसुमरचितगन्धे ग्रीष्मकोटिप्रबन्धे ॥ ११ ॥

---

* Such a monster was said to have been discovered in the Gold-coast a few years back.

† या (आफरिका) गर्व्वभृतां गदां दधती गर्व्वनाशाय इत्यर्थः ; सुषमाखली खनि-मण्डल्येव गदा । अवटतो—गर्त्तात् गर्त्ते वा ।

‡ श्यामः वर्णतः ।  § वामाः—नार्य्यः ।

तस्मिन् प्रदेशे शनकैः कृतासना-
बुयार्-नाम्ना * प्रथिता नृणां गणाः ।
सदैकचित्ता विलसच्छ्लाघना
वसन्ति ते सम्भृत-सर्व्व-साधनाः ॥ १२ ॥

पराधिकारं न विदन्स्वतस्ते †
कर्त्तुं सश्रीरां खनिमात्महस्ते ।
युद्धादिकार्य्येषु परैरशक्याः
सर्व्वे बभूवुश्च धृतैकवाक्याः ॥ १३ ॥

स्वत्वं पराचीन‡मनेककालं §
सुवर्णखन्यादिषु ते विशालम् ।
उत्तस्थुरिंराजगणस्य हर्त्तुं
खर्व्वो इवेन्दुं स्वकरेण धर्त्तुम् ॥ १४ ॥

---

* The Boers. The Transvaal was first occupied by the Boers in 1835, and the country was annexed to Great Britain in 1877.

† "Prior to the discovery of the gold-fields in the Transvaal, the Boers had no means of carrying into effect the great idea of founding a new nation ; but the germ has always existed from the time that the Cape-Colony became a Dutch possession."—*Rise and fall of Krugerism.*

‡ पराचीनं—प्राचीनम् । "The conversion of the South African Republic into a British dependency took place on April 12, 1877."—*Rise and fall of Krugerism.*

§ उत्तस्थुरित्यस्य क्रियाविशेषणमेतत् । मेजुबादि(Majuba hill)-प्रदेशेषु हतः पूर्व्वं समरोद्योगादिभिः इति हृद्यम् ।

पितामहाद्याश्च सुताश्च पित्रा
दृष्ट्वा सुवर्णप्रसवं धरित्र्याः ।
स्वदान्तथा हीरकखण्डमन्तः
ते संबभूवर्न्नु लोभवन्तः ॥ १५ ॥

इंराजसिन्धुं भुवि युद्धनावा
तितीर्षवस्ते कुटिलस्वभावाः ।
तुष्णीं रणायोजनमग्नचित्ता
बभूवुरासादितभूरिवित्ताः * ॥ १६ ॥

ते सान्त्विताश्चापि न शासनस्था
न नेत्युदाहृत्य सकम्पमस्ताः ।
श्रुत्वा न साहेबनृणां प्रशंसा
बलाद्बभूवुर्हततत्तदंशाः ॥ १७ ॥

"धरामणेर्दूरकृतप्रवासा
वयं भवामोऽन्यजनस्य दासाः ।
खनिं परित्यज्य वनं व्रजाम-
स्तथापि नेंराजगणं भजामः" ॥ १८ ॥

---

* "Enormous importations of warlike munitions were carried on after the Raid."—*Ibid.*

"The dream of the Conquest of the whole of South Africa was indulged in by the Transvaal Statesmen."—*Ibid.*

इतीव चक्रुर्भुवि ते प्रतिज्ञा *
मध्याह्नसूर्य्या इव रश्मितिग्माः ।
निशम्य तेषां वचनं सहर्षं
स्त्रियोऽपि चक्रुः कुसुमस्य वर्षम् ॥ १९ ॥

सन्मन्त्रदे बन्धुगणे निरस्ते
कृत्वा प्रतिज्ञावचनानि मस्ते ।
प्रातर्विवस्वानुदयाद्रिभातः,
ते ते समुत्तस्थुरमी सभातः † ॥ २० ॥

अमङ्गलाडम्बरपूर्णयात्रा
नियोजिता वामगतेन ‡ धात्रा ।
प्रौढा युवानश्च बुयारपुत्त्रा §
रणाय चेलुर्विलसत्तनुत्राः ॥ २१ ॥

उपद्रवं स्वेन दलेन पुष्टाः
प्रवेष्टनादिक्रिययाशु दुष्टाः ।
चक्रुश्च साहेबनृणां निकेते ¶
मुदैकवाक्याः स्वबलेन ते ते ‖ ॥ २२ ॥

* आभीक्ष्ण्ये बहुवचनम् ।

† Kruger's ultimatum was issued on the 10th October 1899.

‡ वामगतेन—प्रतिकूलेन ।

§ "It was why it was important to get even the youths from 18 to 20 years of age accustomed to the whistle of a rifle-bullet or the roar of a shell." ¶ इंग्राजाधिकृतदेशेषु इति तात्पर्य्यार्थः ।

‖ "The first step was the expulsion from the country of men, women and children who were of British origin."

स्वर्णान्युपादाय च लौहयाने
साहेबवर्गे रक्षिते प्रयाणे।
जङ्कुश्च तान्यर्द्धपथे बुयारा
बलात्पतन्तो रणदुर्निवाराः* ॥ २३ ॥

राज्ञी चिरस्वत्वविलोड़नाद्यै-†
र्युद्धं प्रदेहीति बुयारवाद्यैः‡।
तथात्मसात्कारतया खनीना-
मसृङ्निभा साविरभूद्दीना ॥ २४ ॥

निशम्य सा वत्सगणस्य पालिका
खनिक्षतिं रक्तमयीव कालिका।
महिष्यभूत् सज्जितयुद्धयात्रिका
बुयारजातेरिव कालरात्रिका ॥ २५ ॥

अयःपथे नाजनि यानवाद्यं§
द्रव्यं महार्घं, लुठितञ्च खाद्यम्।
पक्षद्वयोर्¶घोरतरो विवादः
प्रादुर्बभूवेति नृणां प्रवादः ॥ २६ ॥

* "This armoured train was wrecked by the Boers at Kraai-Pan, October 12, 1899.

† राज्ञी—विजयिनी। "By the convention of 1881, Transvaal was allowed complete self-rule *under the suzerainty* of Her Majesty."

‡ War was declared by the Boer Republic on 10th Oct., 1899.

§ यानं—Railway carriage.

¶ पक्षद्वयोः—इंराजबुयारयोः। इदानीं पक्षद्वयोः समयोद्द्योगो वर्ण्यते (२६—३०)।

दुराशयास्ते च बुधारवर्गा
लोभात्प्रसूताहवकीर्त्तिसर्गाः ।
अल्पेऽप्यनल्पा द्रितिजारिकल्पा
जिघांसया तर्कितशत्रुजल्पाः ॥ २७ ॥

न भूयसा स्वल्पजनस्य युद्धं
कार्य्यञ्च, तन्नीतिविदां विरुद्धम् ।
तदेव विस्मृत्य सुमन्त्रितन्ते
गिरेः स्म शृङ्गं समुपाश्रयन्ते * ॥ २८ ॥

(युग्मकम् ।)

नारीमयाङ्गं समरेष्वभङ्गं
पुंवद्विचित्रञ्च तदर्द्धमङ्गम् ।
कृत्वा च वेशै, र्युयुधेऽल्पसेना
सन्ध्यासु साऽस्तस्थितदेवतेना † ॥ २९ ॥

पुंसा सहाभूत् समरेषु नारी
तया पुमानप्यभवत्प्रहारी ।
इत्येव साहाय्यमनुप्रयाता
वर्षाधिकं ते युयुधुर्विसाताः ॥ ३० ॥

* युद्धार्थमिति शेषः ।

† अस्तस्थितेत्यादि—अस्तोन्मुखो देवतेनः सूर्य्यः यासां सा तथा । सन्ध्याकालेऽपि युयुधे इत्यर्थः । "अल्पसेना"—बुधाराणामिति शेषः ।

बद्धाध्वानो* बभूव रचितवसतय-
स्तीरगास्ते खनीनां
तासां द्वारे प्रचक्रुः स्वदलबलपतिं
ये "जुबाटं"† कपाटम्।
एकत्रान्यत्र देशे गतिपथमथ ते
बाधितुं द्रागरीणां
"क्रौञ्जिं"‡ सेनान्यमुच्चैरिह नियुयुजिरे
तेऽसिधारा बुयाराः॥ ३१॥
आसीत्§ तत्रेंलिशानां भटपतिरपरः
प्राप्तभारो "बुलारः"¶
सैन्यैस्तैस्तैरनेकैरपि च स "मिथुयेन्"॥
सैन्यपालो विशालः।

* बुयाराणां समरोद्योगमुल्लिख्य, इदानीम् उभयपक्षयोः सेनासन्निवेशं सेनापति-नियोगादिकञ्च कथयति। ट्रान्सभालप्रवेशवर्त्मनाम् अवरोधाय बुयाराः टुगेलानदी-तीरे जुबाटं, मडारनदीतीरे च क्रौञ्जिम्, इति सेनापतिद्वयं स्थापयामासुः। तदेव कथ-यति बद्धाध्वान इत्यादिना। बद्धाध्वानः—अवरुद्धप्रवेशमार्गा इत्यर्थः। असिधाराः—असिधारावत् तीक्ष्णा इत्यर्थः। † General Júbert. ‡ General Cronji.

§ आसीदिति श्लोकेन इंराजपक्षीय-सेनापतिनियोगादिकं कथयति। टुगेलानदीतीरे लेडिस्मिथाख्यप्रदेशे, जुबाटेन इंराजसेना परिरुद्धा आसीत्। मडारनद्या उत्तरदिशि किम्बार्लिनामकस्थाने च इंराजसेना बुयारैः परिरुद्धा आसीत्। इंराजपक्षे बुलार-नामकसेनाध्यक्षः जुबाटं बाधितुं नियुक्तः। अत्र द्वैपक्षं भीषणं युद्धमासीत् (तत्तु ५५। ५६। ५७-श्लोकेषु वर्णितम्)। मिथुयेन्नामकसेनापतिरपि किम्बार्लिप्रदेशस्थपरिरुद्ध-सेनानां त्राणार्थम् आदिष्टः, पथि मडारतीरस्थक्रौञ्जिना प्राप्तबाध आसीत्। अत्रापि द्वैपक्षं भीषणं युद्धमासीत् (तत्तु ६१। ६२-श्लोकयोः वर्णितम्)।

¶ General Búller. ‖ Lord Methuen.

पक्षौ द्वौ चक्रतुस्तौ समरमतितरां
द्वारयोस्तत्खनीनां*
युद्धं द्वैपक्षमासीत् जयविजयकथा-
वर्ज्जितं तत्र भीमम् ॥ ३२ ॥

यत् "हाइलण्ड"भट†शून्यमतीव घोरं
संपश्यतामुपरि घूर्णितदृक्चकोरम् ।
त्रिस्थानपाति‡ नरघाति तदेव युद्धं
नाद्यापि हा न च तदस्ति न सन्निरुद्धम् ॥ ३३ ॥

आसीच्चेष्टैलिशानां सरि§दपरतटे
टानसभाले विशाले
तस्मिन्नश्वैर्बभूवुर्घृतसमरघटा-
बाधकास्ते बयाराः ।
तेषां कष्टं तदानीमतिशयमभवत्
पारकाले तटिन्या-
या प्राङ्नित्यं किलासीत् स्फटिकसितजला
सा बभौ रक्तगङ्गा ॥ ३४ ॥

---

* खनीनां द्वारयोरिति—लैडिस्मिथ्प्रदेशे, मडारनदीतीरे च इत्यर्थः।

† The Highlanders.

‡ त्रिस्थानपातीति—लैडिस्मिथ्प्रदेशे, मडारतीरे, स्पियान्कप्नामकस्थाने च इत्यर्थः। स्पियान्कप्नामकस्थानस्थयुद्धं तु ५८। ६०-श्लोकयोः विशेषतः वर्णितम्। अस्मिन्नेव स्थानत्रये प्रधानतः तुमुलं युद्धमासीदिति कविः तदेव कथयति। (Details of these three battles have been given in ślokas 56—62.)

§ सरिदिति—इयमेव टुगेलानाम्नी नदी। अस्याः सन्निकर्षे एव लैडिस्मिथाख्यः प्रदेशः।

अयञ्च समरोदधिर्जलधिगर्ज्जितं स्तम्भयन्
निकाममरिभिस्त्वरैर्गमनवेगमुच्चाटयन्।
इहैव न च केवलं * प्रववृधे दिशं नादयन्
सशब्दरणदुन्दुभिं तत इतश्च संवादयन्॥ ३५॥

ततस्ततो युद्धमभूत् समागतं
त्रिवर्त्मगञ्चापि तदन्यतस्ततम् †।
द्विषद्बलैर्वैरिबलं समुन्नतं
ययौ यमद्वारमवाक् मिथो हतम्॥ ३६॥

तुङ्गात् ‡ कामानदृन्दात्समरबुधगणैः
सञ्जितादस्त्रधूमात्
घोरे तस्मिन् नृमारे श्वसनसखिसखा-
ज्ज्वलुर्हव्यवाडः।
ध्वान्तग्रस्ते समस्तेऽप्यपरिचितपदे
तैः प्रदग्धात्मगात्राः
तस्मिंस्तस्मिन् प्रदेशे समरफलभुजः
स्वे परे ते विषेदुः॥ ३७॥

* प्रधानस्थानत्रयमुल्लिख्य इदानीं सङ्कुलभावेन युद्धं वर्णयितुम्, इतरेष्वपि विविधस्थानेषु यद्यद्युद्धमासीत्, तदपि संक्षेपेण कथयति।

† तदन्यतस्ततमिति—मैफिकिं-ष्टर्मवार्ग-डाण्डी-प्रभृति-स्थानेषु क्षुद्रयुद्धं यद्यदासीत्, तत् सूचयति। "Some minor battles were fought at Dandee, Eland-lagate, Stormburg, Mafeking, Kroonsprut and several other places."

‡ तुङ्गादिति—अधुना सर्व्वेषु पूर्व्वकथितप्रदेशेषु यद्यद्युद्धमासीत्, तत्तद्युद्धं सर्व्वमेव

वह्निर्ज्वरः शब्दनिरुद्धकर्णः *
कृष्णेन धूमेन कृतो विवर्णः ।
रणस्थले तापकरः करालः
क्षिपन् स भस्मोत्करमुज्जगाल ॥ ३८ ॥

बाणाहवस्य ज्वरसृष्टिरेषा
त्वरासमाक्रान्तबलाग्रकेशा † ।
वने वने साम्बपियालनीपे
शिखाजटाभिः सममुद्दिदीपे ॥ ३९ ॥

अपीपतत् कोऽपि तुरङ्गतोऽधः
सेनापतिस्त्रातसमस्तयोधः ।
ततो बुयारस्य तदप्यनीकं
ररोद सञ्चूर्णितहृद्धृषीकम् ‡ ॥ ४० ॥

---

सङ्कुलभावेन वर्णयति (२७—५५) । अस्तधूमादिति कर्पूरादिभिः रसायनैरदृष्टधूमदर्शनादिति कामानलस्यैव विशेषणमिदम् ।

* बाणयुद्धस्य ज्वरेण सह कामानलवह्नेस्तुलनां नाटयन्नाह वह्निरिति । वह्निरिव ज्वरः, पक्षे ज्वर एव वह्निः । कृष्णेन कृष्णवर्णेन धूमेन, पक्षे कृष्णेन देवकीनन्दनेन । वह्निपक्षेऽपि वह्नेर्भस्मोत्करक्षेपे शक्तिरस्तीति भावः ।

† बलाग्रकेशेति—बलं सैन्यं, पक्षे बली बलदेवः । अग्रकेशेति—"हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्यां समानाधिकरणसमास इति वामनः" ।

‡ हृषीकम्—विषयेन्द्रियमिति कोषः । हृत्—हृदयम् ।

कस्याप्यत्रैव युद्धे प्रसभमरिजनैः
पात्यमानस्य यष्ट्या
त्रासाज्जिह्वाविहृत्तेर्गडिति * निगदिते
डम्भ † वचस्तुङ्गमासीत् ।
तेनैको धावितः श्वा द्रुतपदमरिभिः
प्राप्तश्छिन्नः पुरस्तात्
तेनानस्त्रेण पश्चात् रणभुवि विजने
किं कृतं तन्न जाने ॥ ४१ ॥

विसंष्ठुलाऽवाग् गमने च मन्थरा ‡
गलद्रणोविन्दुविलोहिताम्बरा ।
रणस्थली नैव नृणां रतिक्षमा
बभौ यथा पुष्पवती सुमध्यमा ॥ ४२ ॥

हा तात तातेति वदंश्च वाणीं
पतन् रणे कोऽपि गतश्च हानिम् ।
आदौ द्विषत्सैन्यगिरा च बद्ध-
स्ततः परं शत्रुकरे विनष्टः ॥ ४३ ॥

* God. † Dog.

‡ मन्थरेति—मन्थरवन्तं करोतीति मतुपो लुकि "तत्करोति तदाचष्टे" इत्यनेन णिचि मन्थरयतीति पदं सिध्यति। ततो मन्थरयतीति वाक्ये पचाद्यचि "मन्थरा"। अतएव रणस्थलीपक्षे—भूपतिताश्वघोटकादीनां बाहुल्यात् सुखगमनबाधादायिनीति अर्थः। पक्षे सुगमम्।

वाग्युद्धमेको विजितोऽप्यहासीत्
तस्यैव पश्चात् छलयुद्धमासीत् ।
पत्रं कपोतस्य च पत्त्रलस्न
धियामिषस्यान्यपतत्त्रिभग्नम् ॥ ४४ ॥

रणे रणे यः सुदृढावघातः
स एव तेषां खलु वज्रपातः ।
ततो न माद्यन्ति मुदा बुयाराः
शून्यालये क्रन्दितपुत्त्रदाराः ॥ ४५ ॥

तुङ्गानामभिषङ्गसङ्गमसकृत् व्यङ्गं प्रवीराङ्गनं
तेऽङ्गीकृत्य सरङ्गमङ्गविकलानालिङ्ग्य चालिङ्ग्य च ।
कङ्गुङ्गैश्च पतङ्गभाभिरगवत्युत्पिङ्गले जङ्गले
साङ्गोपाङ्गतुरङ्गपुङ्गवगणैः सार्द्धं रिरिङ्गुस्तदा * ॥४६॥

समष्टितो मुष्टिमिता रणे स्थिताः
पुनर्भवन्तीव पुनर्निराकृताः ।
असृक् यथा कृत्तकरान्निवारितं
वहिष्कृतञ्चापि पुनश्च निःसृतम् ॥ ४७ ॥

---

* अभिषङ्गः—पराभवः । व्यङ्गं—विगताङ्गम् । अङ्गीकृत्य—स्वीकृत्य । सरङ्गमिति क्रियाविशेषणमेतत् । कङ्गुः—प्रियङ्गुः, काउन् इति भाषा । ते—बुयारा इत्यर्थः । अगवति—पर्व्वतविशिष्टे । ते बुयाराः प्रवीराङ्गनं (युद्धचेत्रम्) अङ्गीकृत्य, अङ्गविकलांश्चालिङ्ग्य, कङ्गुङ्गैः सूर्य्यकिरणैश्च पिङ्गलवर्णे जङ्गले, तुरङ्गसमूहैः सार्द्धं रिरिङ्गुः—इति अन्वयरीतिः । रिगि—गतौ ।

कृत्वाङ्गनाः प्रश्नुकदम्बमास्ये
रणे स्थिता भर्त्तृगणस्य दास्ये ।
ज्ञातास्च ताः शत्रुभिरेवमारात्
यानेऽग्रतो वामपदप्रचारात् ॥ ४८ ॥

निवार्य्य तास्चैव विभासमानं
पद्मभ्रमात् प्रौढ़तरालियानम् ।
सैन्यं प्रचक्रुः परिपीड्यमानं
कटाक्षवाणेन विनात्मदानम् ॥ ४९ ॥

या या च युद्धे कृतवीरदर्पा
जयाय वेगेन कृतप्रसर्पा ।
सा सा न सेना पुनरागताभूत्
ततोऽभवद्वैरिगणे महामुत् ॥ ५० ॥

करधृतजययष्टिवैजयन्ती
पतपतशब्दमथाब्दवत् वदन्ती ।
अरिगणविजये भये परेषां
तुरगगणो व्यक्ततोच्चकैस्च हेषाम् * ॥ ५१ ॥

* अधुना रणभूवर्णनम् आरभ्यते (५१—५५)। अब्दवत्—जलदवत्। व्यक्तत—विकृतहेषां चकार।

पतितनरसङ्कैः करालैः
सुविकृतमुखलोचनैः शृगालैः।
भयमजनयन्न वाच केषा-
मवनि*रथ गलन्नरास्थिकेशा ॥ ५२ ॥

परधनमुदभृत् मनःप्रलोभि
ह्यमहिषाजकपोतपक्षिगोभिः।
तदभिहृति†नियुक्तसैन्यभाराः
परिरुरुधुश्च रणे ततो बुयाराः ॥ ५३ ॥

श्वसनगतिपतत्पताकमुच्चैः
परिपतितैश्च खलु प्रसूनगुच्छैः।
अजनि रणपदं‡ प्रभूतदृश्यं
क्षितिपतितं§ न च कैस्तदाभिवीक्ष्यम् ?॥५४॥

* अवनिः—रणभूमिः।

† अभिहृतिः—संग्रहः; लुण्ठनवर्णनमेतत्।

‡ रणपदं—रणभूः।

§ क्षितिपतितमित्यादि—रणस्थलपतित-द्रव्यसम्भारलुण्ठने सेनानां व्यग्रता आसीदिति स्पष्टार्थः। "Horses lay stretched out in various attitudes of sudden death, and every here and there was a dead soldier. Broken-down wagons and forage lay scattered about, and the whole scene told a terrible tale."—*The Friend of India, April* 26, 1900.

पितृवनमुद्भूङ्गिना नृदाहं
परिपतितास्वनराश्ववाजिवाहम् * ।
अपि भयमतनोन्न वाय केषां ?
दिशमकरोत्तदहो प्रचण्डवेशाम् ॥ ५५ ॥

ततः खनिपथे स्थितः एथ्यबलैर्जुबार्ट् अन्वितः
परस्य बलवान् बलं स च चकार दत्तानलम् ।
द्विषद्बलचयाः चताः क्रमश एव मान्द्यं गता
विलातपरिषद्गता समभवच्च चिन्ता तता † ॥५६॥

"लेडिस्मि" ‡ दुङ्गरणमुन्मथितात्मसैन्यं
सेनासमाकुलतया परिभातदैन्यम् ।
को न स्मरिष्यति न च स्मरतीति कामं
नाद्यापि यद्व्रजति नैव पुनर्विरामम् ? ॥५७॥

---

* पितृवनं—श्मशानम् । वाजिवाहः—अश्वसादी । तत्—पितृवनमिति यावत् ।

† अधुना सप्तभिः श्लोकैः क्रमेण पूर्व्वकथितस्थानत्रयगयुद्धं विशेषभावेन वर्णयति। तत्रादौ लेडिस्मिथ्प्रदेशे यद्युद्धमासीत्, तदेव कथयति द्वाभ्यां (५६—५७) ।

Ladysmith was besieged by the Boers with a large army. "General Búller attempted to force the passage of the Tugela at Colenso, but his guns under Colonel Long pushing too far ahead, were surprised by the enemy and were with the exception of the two captured. Búller's attack on the left under Hart, had likewise failed and he was compelled by the loss of his artillery to fall back upon Chieveley with a heavy loss." —*Statesman, January* 25, 1900. This event happened on 15th December 1899. "Some of those who witnessed the Colenso fight state that the Boer shell-fire was very effective."

‡ Ladysmith. अत्र इंरेजबलं जुबार्टेन परिरुद्धमासीत् । तद्रक्षोद्धरणक्रियायां बुलारः नियुक्त आसीत् ।

"किम्बार्लि"*भुवंत ! रणे परिपीतरक्ता
नक्तञ्चरीव ननु या नरघातशक्ता ।
नाद्यापि तृप्तिमुपयाति, बुयारजातं
भुक्त्वेव किञ्च विरमिष्यति साश्रुपातम् ? ॥५८॥

"स्पियान्कपा"†ख्यानघरे प्रदेशे
दलद्वयाख्यां विहिते प्रवेशे ।
बुयारनृणामपि तत् समृद्धं
युद्धं बभौ स्तम्भितबालवृद्धम् ॥ ५९ ॥

अधूमकामानमुखात् तनूनपात्
चकार सर्व्वं खलु यत्र भस्मसात् ।
अकम्पयत् तच्च ततः सुदारुणं
जलं स्थलन्तद्रुधिरेण चारुणम् ॥ ६० ॥

(युग्मकम् ।)

* Kimberley. "Ladysmith and Kimberley, both of these places were besieged by the Boers, and heavy fightings took place with great losses on both sides. These places were not relieved, until after the arrival of Lord Roberts who, with concealed movements took the enemy by surprise, which occasioned the retreat of General Cronji from Magersfontein." (Vide notes on 31 and 32 ślokas.) [३१।३२-श्लोकद्वयस्य टीका द्रष्टव्या ।]

† Spionkop. एतदपि अपरं प्रवेशवर्त्म। अत्र भीषणं युद्धमासीत् । This battle took place on the 24th, 25th and 26th January 1900. "Press telegrams describe the fight at Spionkop as of a bitter

क्रौञ्जिनाऽन्यसरणौ* परिस्थितो
मेथुयानथ बभौ पराजितः ।
सोऽभिजित्य परयोद्धृपर्षदः,
गर्वितश्च ववृधे लसन्मदः ॥ ६१ ॥

विग्रहस्य यशसा वहन् धुरो
ह्वाइलण्डभटमागतं पुरः ।
भर्त्सयन् परुषया गिरा च तं
सोऽपि† तत्र समरेऽकरोद्धतम् ॥ ६२ ॥

(युग्मकम् ।)

and bloody nature. The summit was exposed to a terrific cross-fire from the artillery and musketery. * * Smokeless powder was used by the enemy, which prevented our locating the enemy's guns. The withdrawal of our forces became necessary and was effected in good order."—*The Friend of India, February* 1, 1900. [३३-श्लोकस्य टीका द्रष्टव्या ।]

* अन्यसरणौ—अन्यत्र प्रवेशवर्त्मनि । अत्रापि तुमुलं युद्धमासीत् । मडाराख्यनदीतीरे इदं युद्धमभवत् । [२१।२२-श्लोकद्वयस्य टीका द्रष्टव्या ।]

† सः—क्रौञ्जिः । अत्रैव युद्धे ह्वाइलण्डसैन्यानां दारुणो विमर्द्दो बभूव । This is known as the battle of Magersfontein. "Mathuen attempts a movement at Magersfontein. The Highland Brigade is caught while marching in close order and Mathuen's proposed attack on the enemey's trenches is turned into a repulse with great loss. December 11, 1899." Thus Mathuen was opposed in his march to relieve Kimberley."—*Statesman, January* 25, 1900. "Just as the Highlanders were beginning to

प्रवृत्तिरिति जाग्रती प्रतिययौ महिष्याः श्रुतिं
समादिशदथाप्यसौ सकलतुङ्गसेनापतिम् ।
दिनैः कतिपयैस्ततः स च बभौ "रबाट्" आगतो *
यमस्य वशतां गतो ज्वरबलैर्जुबाट् उन्नतः ॥ ६३ ॥

तया रबार्टागमनस्य वार्त्तया
स्वसेनया क्रौञ्जिरसौ भयार्त्तया ।
निजाश्रमाच्छाद्य पथि स्थितः श्रुत-
स्ततो द्विषत्सैन्यबलैरभिद्रुतः † ॥ ६४ ॥

क्रौञ्जेः स्वगात्रान्तिकवैरिवासे
जाते ततः शत्रुजयस्य नाशे ।
त्रस्तः क्रुगारं ‡ प्रति वृद्धदेशान्
प्रस्थापयामास स एव शेषान् ॥ ६५ ॥

---

deploy, the enemy at point-blank range poured in so scathing a fire that the Black-watch who were in the lead, were literally mown down in sections."—*The Friend of India, February* 1, 1900.

* प्रवृत्तिः—स्थानत्रये इंराजबलभङ्गकथा । महिष्याः—विजयिन्याः । रबार्टः—Lord Roberts. He arrived in the 1st week of February, 1900.

† "Cronji's army, with 1000 wagons, is in full retreat towards Bloemfontein and is being hotly pursued by General Kelly-kenny with the 6th division." "The Boer force under Cronji has been effectually surrounded and though standing desparately at bay and fighting stubbornly, has little chance of escape. The main body of the enemy are enclosed in a veritable death-trap."—*Statesman, March* 15, 1900. ‡ Krüger.

हृतः स विश्वासतयाऽङ्गनाभि-
र्मृतस्य गन्धेन विमोहिताभिः ।
द्रव्यक्षयात् शत्रुभयाच्च युद्धे
भावे स्थितोऽभूदभितो निरुद्धे* ॥ ६६ ॥

रोरुद्यमानप्रमदासभातः
सोऽसौ विजेतुः शिविरं प्रयातः ।
त्राणेऽपयानेऽप्यनसां प्रयाणे
लेभे न कालं प्रतिरोधदाने ॥ ६७ ॥

सुकौशलं शिक्षितमात्मरक्षाः
सुविस्मिता वीक्ष्य परे विपक्षाः ।
तत्पार्श्वयोः सज्जितसैन्यराजि
तदीयकैर्वीरवरैर्व्यराजि † ॥ ६८ ॥

* "General Cronji appears to be in laager at Koodoosrand Drift and to be occupying the bed of the Modder river —a position which one account describes as a death-trap. The fire from 50 guns including howitzers and naval pieces is described as enveloping Cronji's army in an appalling green mist. By evening the Cordon round the enemy had been completed and every outlet has been closed."—*Statesman, March* 15, 1900. "Early in the day, Cronji asked for a 24 hour's armistice to bury his *dead.* Lord Kitchener refused to comply:" "The laager is discribed as a warren of burrowed holes for sheltering the *women and children.*"—*Statesman, March* 15, 1900.

† "Shortly a group of horesemen were perceived approaching Lord Roberts' sleeping-wagon. The Seaforths formed a guard and General Pretyman rode up, presenting a sun-burnt, grey-haired man in a tweed-overcoat and felt-hat, with an orange ribbon."—*Ibid.* सैन्यराजीति—क्रियाविशेषणमेतत् ।

तदागमस्त्वद्वंजयागमोऽभूत्
विपक्षपक्षस्य तथा मनोभुत् ।
तमागतं वीक्ष्य मुदा तदानीं
स्वयं रबार्टोऽस्य दधार पाणिम् * ॥ ६९ ॥
ततः पुरा कल्पितवासधाम
द्वीपान्तरं तूर्णमसौ जगाम † ।
सेनाधिपोऽन्तर्हितसैन्यभारः
सपौत्तदारः स च सद्बुयारः ॥ ७० ॥
प्रागेव दर्पेण च साधितायाः
फलन्तदिंराजविरोधितायाः ।
यो येन भावेन करोति कार्य्यं
तेनैव तस्यास्ति फलन्त्ववार्य्यम् ॥ ७१ ॥
क्रौञ्जेस्तदैराजकृतेऽपसारे
पलायिते चैव भयाद्बुयारे ।
जगर्ज्ज विक्रम्य रबार्ट-सैन्यं
बुयारहृन्दञ्च विवेश दैन्यम् ॥ ७२ ॥

* "Lord Roberts shook hands with him, remarking "I am glad to see you and glad to meet so brave a man." "Cronji was taciturn."—*Statesman*, *March* 15, 1900.

† St. Helena. "General Cronji and a number of Boer prisoners sailed from Capetown on Tuesday for St. Helena in the transport *Milwankee*."—*Statesman*, *April* 26, 1900.

आनन्दजातं* सहसा विलातं†
बभूव वाष्पाविलमाशुयातम् ।
अभूत् स्वार्ट-प्रतिमा-गले स्रक्
जयश्च तस्यैव ततो जनोऽवक्‡ ॥ ७३ ॥

प्रागेव यो§ भारतवर्षमध्ये
जातः शिशुः काणपुरे¶ऽतिमेध्ये ।
गर्भाच्च मातुर्विधितो विधातुः
पतन्नभूत्कल्पितवीरधातुः ॥ ७४ ॥

राज्ञीराज्यं बलेन प्रतिदिनमभितः
पालितं यस्य बाह्वो-
र्यस्यान्तर्धीप्रयोगाद्भृतमथ न कणा-
मात्रमेतत्कलङ्कं ।
रक्षास्तम्भोऽयमुच्चैर्विपदि विजयते
दिग्जयेष्विंलिशानां
सेनानृणामधीनः प्रभुरपि शरणे ‖
मिष्टवाग्दृष्टिसृष्ट्या ॥ ७५ ॥

---

* "जातकालसुखादिभ्यः परा निष्ठा वाच्या" इति परनिपातः ।
† विलातमिति—इंलण्डस्य बङ्गदेशप्रचलिता संज्ञा ।
‡ अवक्—उक्तगी ।
§ यः—स्वार्टः पराक्रमते । त्रिभिः श्लोकैस्तमेव वर्णयति ।
¶ Cawnpore.
‖ शरणे प्रभुरपि सेनानृणामधीनः स्वतन्त्रः । तादृशोऽयं भावस्वभाव इति ।

होता युद्धाग्निकाण्डे रिपुफणिकवला-
दुद्धरन् दुष्टदंष्ट्रां *
भ्राजिष्णुर्घोटकस्थः परबलदलनो
घूर्णयन् वैजयन्तीम् ।
'राज्ञीराज्यं समस्तं क्व च तव विषये'-
त्येवमेवेदमुक्त्वा
चक्रेऽवक्रक्रमस्थः परनृपनगरे
प्रोथनं वंशयष्टेः † ॥ ७६ ॥

नासीन्नास्त्येव कश्चित् पुनरपि भविता
भारते यो न जातो
मध्ये स्वीयप्रभावैरनुगतसकलो
वीरचूडामणीनाम् ।
सेयं भूर्भारतीया बलधरजननी
चन्द्रसूर्य्याग्निसेव्या
वीरैस्तैस्तैरुदारैर्जनमिममवतात्
वीरसूर्वीरधात्री ‡ ॥ ७७ ॥

* दुष्टदंष्ट्रां—विषदन्तम् । कवलात्—चर्वणया मुखादित्यर्थः ।

† वंशयष्टेः प्रोथनं—ट्रान्सभाले जयवैजयन्तीप्रतिष्ठाम् इति भावः ।

‡ श्लोकद्वयेन प्रशस्ती भारतभूमिं वर्णयति ।

राजानो यां निरीक्ष्य स्त्रियमिव युवतिं
चारुकाञ्च्या मनोज्ञां
बिभ्राणां कुन्तलाद्यैर्विकसितकुसुमै-
रङ्गशोभां सहाराम् ।
निर्निद्रा लब्धुमेनां प्रकटितकटकां
तीव्रवैरानुबन्धाः
श्रीश्रीमत्कामरूपां कति कति न ययु-
र्हा ! पुरा प्रेत्यलोकम् ? * ॥ ७८ ॥
(युग्मकम् ।)

एवं बुयारा गतशान्तिभावा
युद्धार्णवेऽल्पीकृतसैन्यनावा † ।
तिष्ठन्त्यथाद्यापि रुषा लसन्तः
साहेबसैन्यं सहसाक्रमन्तः ॥ ७९ ॥
मन्त्रौषधिभ्यामिव कृष्णसर्पा
विडम्बिताः सम्प्रति भग्नदर्पाः ।
युद्धं प्रकुर्व्वन्ति तथापि रोषात्
प्रक्षीयमाणा अपि बुद्धिदोषात् ॥ ८० ॥

* भारतभुवो युवतित्वमारोपयन्नाह । कुन्तल:—केशः, पक्षे कुन्तलनामकदेशः । अङ्गशोभा—देहशोभा, पक्षे अङ्गनामकदेशः । सहारामिति—समाल्यां, पक्षे हार(विहार)-नामक-देशः ; हरतीति हारः. रणभूर्वा । कटकम्—अलङ्कारविशेषः,पक्षे उड़िष्यायाः कटकदेशो वा । कामरूपः—शृङ्गारादिसमयवेशः, पक्षे कामरूपनामकदेशः । काञ्ची—मेखला, पक्षे Conjiveram (Capital of Drávida) । † नावेति छेतव्यं तृतीया ।

विपक्षविद्रोहपथानुसारिणः
प्रयाण-यानाध्वविघातकारिणः ।
लुठन्ति खाद्यानि धनानि विद्विषां
नयन्ति तेऽक्षिष्वरिचिन्तया निशाम् ॥८१॥

तेषां सदैवान्तिकगामिनीतिः*-
र्यानं† न जाग्रन्मुररीध्वनीति ।
अरिर्हरिः संयति रोरवीति‡
क्षितिर्गता, सर्व्वत एव भीतिः ॥ ८२ ॥

(कलापकम् ।)

मारीचस्य च रामवत् द्रुतपदं
धावंश्च तेषां पदं
"किस्नार्" § सम्प्रति सूदनस्य विजयी
तत्रास्ति सेनापतिः ।
पश्यंस्तांश्च वने न पश्यति पुन-
र्वेगेन दूरङ्गतान्
क्षुधो मध्यदिनेऽपि नक्तमपि च
श्रान्तो विलम्बायते ॥ ८३ ॥

* ईतिः—अतिवृष्ट्यादिषट्प्रकारिका ।
† यानं—Railway Carriage.
‡ अरिर्हरिः—शत्रु-सिंह इत्यर्थः । संयति—युद्धे । रोरवीति—पुनः पुनः गर्ज्जति ।
§ Lord Kitchener. तेषां—बुयाराणामित्यर्थः ।




शत्रूनां दंशनमेव चेद्विलसितं
तत् जानुतोऽधःस्थले ;
का चिन्ता ? खलु लण्डनस्य विजयः,
सर्व्वैरिदं घुष्यते ।
शत्रूणां कमला * चिराय विगता
स्वाधीनताभिः समं
लोकानां भणितिर्मृषा न च कृथा
स्त्रीणां शिशूनामिव ॥ ८४ ॥

इति श्रीश्रीश्वरीये विजयिनीकाव्ये
बुयारयुद्धवर्णनो नाम
पञ्चमः सर्गः ।

---

* शत्रूणां कमला—बुयाराणां जयलक्ष्मीः ।





# षष्ठः सर्गः ।

राज्ञी तु पूर्णायुरिहैन्द्रधुर्य्या *
सुतोत्सवे कल्पितराजतूर्य्या ।
प्रदाय पुत्राय निजाधिपत्यं
विवेश सा तत्र तु यत्र सत्यम् ॥ १ ॥

सा प्रेष्य दूतं पुरतः स्वमंशं
प्रियेश्वरे मानसराजहंसम् ।
ययावनुस्वप्नपथेन माता
समाधिना सत्यपथं प्रयाता ॥ २ ॥

क्लेशादिकं कायभुवः खनित्रं †
न ; तत्तिरोधानमिदञ्च चित्रम् ।
प्रश्वासवातेन मतिः पताका
व्यनृत्यदग्रेऽप्यमलेव राका ॥ ३ ॥

---

* इन्द्रस्येदम् ऐन्द्रम् इन्द्रपदं तस्य धुर्य्या भारवाहिनीत्यर्थः । † खनित्रम्—अस्त्रविशेषः, खन्तीति भाषा । क्लेशाद्यभावात्तत्प्रयाणं विस्मयकरमासीदिति भावः ।

नाम्नाऽसवर्णेति * च सौधदेशं-
व्याप्याम्बरं संस्थितमस्यशेषम् ।
अलुप्त-विज्ञान-धिया नयिन्या
पदं कृतं तत्र तया जयिन्या ॥ ४ ॥

देवैरदृश्या क्व च सा नृदृश्या !
वियच्च भवत् खनितं क्व कृष्या ?।
न मानुषीत्येव जनप्रतीति-
र्यादर्शविम्बे प्रतिविम्बतीति † ॥ ५ ॥

आलेख्यपट्टामपि मुद्रिकायां
सान्निध्यमस्या जनसंहितायाम् ।
छायाफटोग्राफ‡विशेषयन्त्रात्
विलोकतेऽस्याः § प्रतिमां स्वतन्त्रात् ॥ ६ ॥

निरीक्ष्य यस्याः प्रतिमां प्रभाते
प्रजाव्रजाश्चिन्तितआर्य्यजाते ।
कुर्व्वन्ति संसारविधौ प्रयाणं,
तद्दर्शनं किं सुलभायमानम् ? ॥ ७ ॥

---

* Osborne Palace.

† चधुनेति यावत् ।

‡ फटोग्राफ इति—मूर्त्तिनिर्म्माणयन्त्रविशेषः ।

§ विलोकते—जन इति शेषः ।

सा पार्श्वगैरप्यविभातदृष्टि-
र्दिवः सदेवीक्षणपुष्पदृष्टिः * ।
आकाशगङ्गाम्बुमलात्मभासा
स्वर्गस्य मार्गे प्रबभौ सुदासाः ॥ ८ ॥

बृटिशनृपतिसिंहस्याधिकारे समस्ते
विचलति सति तस्मिन् वागयते नम्रमस्ते ।
तदभिगमन†मासीत् साङ्गना‡सन्निधानं
द्रुतगति नभसोऽन्तः कान्तिभास्वद्विमानम् ॥ ९ ॥

या भानोश्चक्रवाले विलसति गगने
ताम्रवद्वर्णमाले
पुण्ये सा जानुयारे§हरिमितदिवसे
नन्दनस्याह्नि भूम्याः ।
सायाह्नस्यान्तरालेऽद्रितिमितघटिका-
वाद्यकाले विशाले
स्वर्गव्यग्रेव राज्ञी द्रुततरमवनी-
त्यागमाविश्चकार ॥ १० ॥

* आकाशात् देवाङ्गनाभिरीक्षिता सा पुष्पदृष्टिभिः सह इति तात्पर्य्यार्थः ।
† तस्या जयिन्या अभिगमनम्—इत्येव कर्तृपदम् ।
‡ अङ्गना—देवाङ्गना ।
§ January. "The Queen died on Tuesday evening, January 22nd, 1901, at 6-30 P. M."

प्रसुप्ति-शय्यासु निशां प्रपद्य
सा जाग्रती स्वप्नमियाय सद्यः ।
त्वरा ततोऽस्वप्नपुरं प्रविष्टा
परास्तसिग्ध-पथेन शिष्टा ॥ ११ ॥

सा चैश-योगे विहितावधाना
सद्यः समाप्तेन्द्रियदृश्यमाना ।
राज्ञीति या सार्व्वजनीनवाणीं
चक्रे विलुप्तां शनकैस्तदानीम् ॥ १२ ॥

आ जन्मतः शत्रुगणांश्च जित्वा
जगद्विषादं बत ! वर्द्धयित्वा ।
सा पार्थिवच्छत्रतलेऽनुकूले
जहौ वपुस्तारुतले दुकूले ॥ १३ ॥

सुतनुरतनुरनुशीलन-धीरा
ब्रह्म, वि-राजित-पञ्च-समीरा ।
अविशदतीन्द्रियमिन्द्रियवाह्या
ज्ञान-बलात्कृतपातकदाहा * ॥ १४ ॥

* सा सुतनुः अतीन्द्रियं ब्रह्म अविशदित्यन्वयः । वि-राजितेत्यादि—वी आकाशे राजित-पञ्चसमीरा आकाशादिपञ्चपवनेत्यर्थः । अनुशीलनं—ब्रह्मानुशीलनमित्यर्थः ।

इदन्तु तस्याः पुनरेकतत्त्वं
मनः पतिप्राप्तितयास्तमाप्तम् ।
द्रागेव पश्चात् परिणाम-गत्या
निमीलितं केवलमक्षि सत्या * ॥ १५ ॥
इदञ्च तस्याः पुनरन्य-तत्त्वं
राजासनं ज्येष्ठसुताय दत्तम् ।
वरेण्यदेशे तु शरण्यभूता
याता ततो ब्रह्मसमाधिपूता ॥ १६ ॥
अवाक् स इंराजगणोऽतिदुःखितः
सहाश्रुपातैर्जगतां समुत्थितः ।
प्रसार्य्यते न स्म च पण्यवीथिका †
शुचा कुतोऽप्याविरभूद्विभीषिका ! ॥ १७ ॥
तस्यास्तिरोधान-नवक्रियायां
विषादमूर्त्त्यौ परिभासितायाम् ।
व्यग्रं समग्रं जगदस्तगर्व्व-
मड्गो ‡ यथा भग्नसमस्तपर्व्व ॥ १८ ॥

* सत्या—साध्व्या तयेत्यर्थः ।

† "In all parts of the provinces, public functions were suspended and there were innumerable expressions of public sorrow. Similar utterances of grief and sympathy continue to come in from every part of the Empire, indeed from almost every part of the *world*."—*The Statesman, February* 12, 1901.

‡ मड्गः—द्विरदः । पर्व्व—ग्रन्थिः उत्सवो वा ।

अनारतञ्चापि पराङ्मुखं सुखं
जना विपन्ना, मलिनं जगन्मुखम् ।
प्रसन्नसत्त्वेऽव घनाविलान्तरा
विलुप्तहर्षा च बभौ वसुन्धरा ॥ १९ ॥

अदीपदानेव च सत्पथावली
प्रशान्तनृत्येव च ताण्डवस्थली ।
पुनर्मुदां वेपनतो वसुन्धरा
प्रभग्नभावेव सशैलकन्धरा ॥ २० ॥

न च क्रियादिर्न विचारपद्धति-
र्न वा नृणां छट्कलं, न सङ्गतिः ।
निवेदितं वा जगृहे न कस्य कौ*-
रिदं जगत् स्तम्भितवद्यदुच्चकैः ॥ २१ ॥

अब्दे नवे विंशशतेऽच साध्वी
कलिक्रमाद्दर्दितलोकधात्री ।
राज्ञी-तिरोधानकिणाग्रभागे †
हा ! सन्ति मर्त्त्या न शुभेऽनुरागे ॥ २२ ॥

* अवबोधनाय मुद्रामात्राय भवती जनान् शोकाख्या अवस्थाता न तां जयति इति कविना मतम् ।      † किण:—चिह्नम् । अग्रभाग:—मुखं, प्रारम्भ इत्यर्थः ।

अमी च साहेबगणाः समस्ता *
राज्यादिकार्य्येषु कृतावहस्ताः ।
अक्रोधनाः शान्तिमुपानयन्तु
व्ययैर्धनानां शुभदाश्च सन्तु ! ॥ २३ ॥

दुःखं हि राज्ञां ध्वजभङ्ग एष
कृतश्च येनार्त्ततरोऽद्य देशः ।
उत्पातवाताः पुरतो हि वान्ति
विधीयतां केवलमत्र शान्तिः ! ॥ २४ ॥

श्टङ्गस्य भङ्गोऽद्य च भारताद्रे-
र्भावे न केवाश्रुजलैरिहार्द्र ? ।
औत्पातिकेष्वद्भुतशान्तिरिष्टा,
विश्वासिनस्तां रचयन्तु शिष्टाः ! ॥ २५ ॥
(विशेषकम् ।)

स कः सखे ! ब्रूहि वहिः शरीरतो †
गतः पुनर्नैव भवेत् समागतः ।
मरुत्-प्रचारेण निवेदितस्थितिः
गृहीतदेहेऽपि च तत्तदाकृतिः ? ॥ २६ ॥

* त्रिभिरधुना कविः शान्तिकथामनुनीतयनाह ।
† त्रिभिः कविर्जीवात्मनः परलोकगमनात्मकं प्रश्नमुद्भावयति ।

वसन्नवद्वारपुरे कियद्दिनं
समुल्लसद्देहविडम्बनाकिणम् ।
इत्था जगद्भ्रान्तिमभ्रान्तिमुद्वहन्
भवेद्गतायुर्निजकोटरं दहन् ॥ २७ ॥
कियद्दिनं पञ्चमृणाल-गोचरे
भ्रमंस्ततो वायुपथे गतोऽम्बरे ।
समाप्तलीलो जनिविस्मृतिं गतः
च्युतो भवेद्व्याधि-कुटुम्ब-सङ्गतः ! ॥ २८ ॥
(विशेषकम् ।)

प्रयाणमस्या भुवि संशयस्थं,
तत्त्वेच्छया चस्तमभूत् समस्तम् ।
राज्ञी तु सा लण्डनराजकन्या
वियद्गताभूद्रमणीषु धन्या ॥ २९ ॥
अचेतनां पाण्डुमुखीं प्रसुप्ताम्
अमानुषीं मानुष-शक्ति-गुप्ताम् ।
महा-शयाना*मसवर्ण-नाम्नि †
पुनः पुनस्तां ददृशुः स्वधाम्नि ॥ ३० ॥

* महाशयानामिति—महानिद्रावस्थयोः ।
† The Osborne Palace.

तदङ्गमालोक्य हिमाम्बुशीतलं
निरीन्द्रियग्राममपेतवाग्बलम्।
न चापि तां चेतयितुं भिषग्वराः*
प्रशेकुरार्त्ताः सविषादितान्तराः॥ ३१॥
(युग्मकम्।)

शोकचिह्नमलिनास्ततो जना†-
स्तां समीयुरभितो नताननाः।
ते विलम्बवचनाश्च जङ्गमा
रात्रिकाल इव भूविहङ्गमाः॥ ३२॥

दूरवारितपिपीलिकादिकं
तद्वपुः शवतया गताधिकम्।
नेतुमुद्यममकार्षुरुन्नता-
स्ते तदा प्रबलशोकविच्युताः॥ ३३॥

सेनयार्घ्यमिव रक्षितां निधिं‡
वेलया सवनयेव वारिधिम्।
वाद्यवादकगणेन ते नरा-
स्तां समूहुरथ दुःखितान्तराः॥ ३४॥

* भिषग्वराः:—Doctors Reid, Powell; Barlow and Laking.
† अधुना अन्तसमाप्तिपर्यन्तं शवदेहवहनादिव्यापारो (Funeral Procession) वर्ण्यते।
‡ अर्घ्यं—महामूल्यं; निधेर्विशेषणमेतत्।

तां गताभिमरुणाञ्जलोहितां
निद्रया चितिभिदा तिरोहिताम् ।
निर्ग्रहां * समनयंश्च ते शुचा
वस्त्रनिर्म्मितपथेन सद्रुचा ॥ ३५ ॥

साप्यगादिव सती पतिं प्रति
व्याकुलापि शयने लसद्द्युतिः ।
शोभितेव कुसुमस्य मालया
गन्धवस्तुभिरलं मनोदया ॥ ३६ ॥

सा पुष्पदृष्टेः परतो नृगीता
कर्णीरथे † राजपथेऽभिनीता ।
भूरद्भुता, नाशुरथापि गर्त्तः,‡
सैंही पताका च § भृशं ननर्त्त ¶ ॥ ३७ ॥

---

* निर्ग्रहां—विलुप्तज्ञानाम् ।     † कर्णीरथे—पुष्परथे ।

‡ संख्यातीतलोकपूर्णत्वात् तत्स्थानस्य नाशुरपि गर्त्तं नासीदित्यर्थः ।

§ इंराजानां सिंहालङ्कृता पताका लोकप्रसिद्धा ।

¶ "The coffin with a white silk-pall and the regalia on top rested on a gun-carriage drawn by the eight famous creams with postillions, followed by a brilliant cavalcade of British and foreign princes. At St. George's chapel, the coffin was laid in a catafalque amid a *profusion of flowers.*"—*The Statesman, February* 3 *and* 5, 1901.

स्थिरैरभूवन्त तदा स्म वाहैः *
शुचाग्निनेवोत्थितगात्रदाहैः ।
पशुष्वपि प्रेमदृढानुरक्तिः
प्रमाणितैवात्र तथैव भक्तिः ! ॥ ३८ ॥

वाहेषु तस्मिन्नचलत्सु सत्सु
राज्ञ्याः शुचेवाश्रुजलं वहत्सु ।
संस्थाप्य पोतेषु समुद्र एनां
प्रोवाह तां विस्मितसर्व्वसेनाम् ॥ ३९ ॥

संबभूव बहुनालिकध्वनिः †
पारलौकिकविधौ तदध्वनि ।
हेषया द्विरदबृंहितैः समं
ढक्कया च परिकम्पयन् यमम् ॥ ४० ॥

* प्रकृतेयं घटना विस्मयकरी चासीत् । "The Artillery-horses in the gun-carriage refused to stir and resisted every effort to move them. A Party of Blue-jackets then advanced and offered their services."—*The Statesman, February* 5, 1901.

† "The band played the funeral march and minute-guns were fired, so that throughout the passage, the solemn thunder of canon or the plaintive strains of music were unceasing."—*The Statesman, February* 3, 1901.

अग्रतः सुदृढमुद्यतायुधं
सैन्यवृन्दमुदगाच्चलद्बुधम्।
मध्यतो नृपतिमण्डलं यानै*-
र्वाहनेन शुशुभे च तैर्जनैः॥ ४१॥

यत्रैव तस्याः करधारिकान्वः†
सुष्वाप, तत्रैव च ते महान्तः।
तां नेतुमुच्चैः खलु यत्नवन्तः,
प्रारेभिरे राजगणा लसन्तः॥ ४२॥

अलङ्कृते धीरगणैः सवीरे
तीर्थोपमे तत्र समुद्रतीरे।
पश्यत्सु सर्व्वेषु सकर्णधारः
बभौ महिष्या भवसिन्धुपारः॥ ४३॥

"The coffin covered with coronation-robes surmounted by the crown, orb and sceptre, left Osborne on a Khaki-coloured gun-carriage drawn by eight horses and driven by *Artillery-men.* Immediately behind walked the king and the Emperor William and the Duke of Connaught; then 6 other princes and then nine royal ladies headed by the queen."—*The Statesman, February* 3, 1901.

"The interment at Frogmore of the remains of Queen Victoria was of an unusually impressive nature. In the mausoleum was interred the body of the Prince Consort, who died on December 14th, 1861."—*Statesman, Feb.* 24, 1901.

पोतैरनेकैः स्थिररत्नमुद्रः *
प्रोवाह तां हन्त ! यदा समुद्रः ।
तदा नृणान्तत्र बभूव पार- †
स्तेषां पुनश्चारुकथावतारः ॥ ४४ ॥

निनाय तां वारिपथेन वारिधिः
स ‡ रत्नभाक्, सापि जगत्सुसेवधिः § ।
चचाल सा भूपति-राजिराजिता
समुद्रनौः साग्निकलासभाजिता ॥ ४५ ॥

"नायं समुद्रः पयसां विकारो
राज्ञ्यास्त्वयं जन्मसमुद्रपारः ।
पश्यन्त्विमां ब्रह्मसविम्बपातां
नभःपथे स्वर्गरथे प्रयाताम्" ॥ ४६ ॥

* "The *Alberta*, conveying the Queen's body, will leave Cowes on Friday, steaming through a double line of *sixty warships*, with the king and queen aboard."—*Statesman, Jan.* 30, 1901. "Eight Torpedo destroyers piloted the Royal yacht across, between lines of stately war-vessels to Gassport. Altogether 10 miles of warships were assembled."

† "The crowds on the northern shore are estimated at half a million."—*The Statesman, February* 5, 1901.

‡ स—समुद्र इत्यर्थः ।  § सा—विजयिनीत्यर्थः ।  सु-सेवधिः—सुखनिधिः ।

दूरं जनाख्यातमिदञ्च गीतं,
बभौ त्वरेवार्द्रपथेऽभिनीतम् ।
शुचां शिखायां जगदापतिष्यत्
नवोऽधिराजो यदि नाऽभविष्यत् ॥ ४७ ॥

फ्रग्मोर*संज्ञे तु परेतदेह-
रक्षाप्रदेशे नृपधारितेहः† ।
यामे तृतीयेऽह्नि जनः समस्तः
संस्थाप्य देवीमिव तामनंस्त ॥ ४८ ॥

आनीय पुष्पाणि सचन्दनानि
भक्त्या प्रचक्रुर्भुवि वन्दनानि ।
तां धूपयित्वा बत मातृपूजाः
स्वग्भिर्व्यकार्षुः किल तत्तनूजाः ॥ ४९ ॥

एताः क्रियास्तेऽथ समाप्य चाद्याः
दौवारिकाः साञ्जलयः सवाद्याः ।
तस्यां गृहद्वारि विषण्णरूपा-
स्तस्थुर्मुहूर्त्तं समवेतभूपाः ॥ ५० ॥

* फ्रग्मोरेति श्मशानस्थाननाम । "The body was placed in the Royal Mausoleum at Frogmore."

† ईहा—चेष्टा, मनोऽभिलाषः इति यावत् । नृपः—राज्ञ्या ज्येष्ठः पुत्र इत्यर्थः ।

फ्रगमोरसंज्ञं पितृकानन*स्तत्
श्मशानमेतन्नगरच्छटावत्।
नराचिंतचूष्यं ननु निर्म्मनुष्यं
विराजतेऽद्यापि परेतजुष्यम्॥ ५१॥

पार्थिवादिशववसुसन्निधारणै-
स्तत्पदं नगरवन्निकेतनैः।
यच्च तद्भवनवर्ज्जितं महत्
द्योतते निशि दिवा च कान्तिमत्॥ ५२॥

आसीच्च यत्प्राक् परहस्तगामि
क्रीतं ततस्तीर्थमिदं प्रणामि†।
राज्ञश्च राज्ञ्या अपि देहधारि
प्रसूयते यत् जनपातकारि॥ ५३॥

(विशेषकम्।)

नामधेयकृतचिह्नतस्ततः
तद्गृहाज्जनगणो विनिर्गतः।
राजभोमविनिवेदनात्परं
प्रेतगीत‡मशृणोच्च सादरम्॥ ५४॥

* श्मशानं पितृकाननमिति—Frogmore.

† "Her Majesty spent on this mausoleum nearly a quarter of a million of money."—*Statesman, February* 24, 1901. प्रणामीत्यच पितृनिर्मलदर्थीयः।

‡ भारते तु नदकादिपाठ्यैः हरिसङ्कीर्त्तनादिरूपम्।

उन्मवेन सहितं निरुत्सवं
तद्दिनं मनसि कष्टदं नवम् ।
बहुकार्य्यमुपरुद्धविक्रयं *
निर्भयेष्विव कुतोऽप्यभूद्भयम् ॥ ५५ ॥

"न सप्तमत्वं न च वाष्टमत्वं
राज्ञो विदामो न इदञ्च तत्त्वम् ।
भवान्नृपोऽस्मिन्नृपतेऽस्मदादे-
र्वयं स्थिता एव भवत्प्रसादे" ॥ ५६ ॥

इत्येव तद्द्वीपनिवासिलोकाः
प्रोचुर्मुदा संशयपूर्वशोकाः ।
नेदुः सु-वाद्यानि च यन्त्रवन्ति
क्षितीशवश्या न च के भवन्ति? ॥ ५७ ॥
(युग्मकम् ।)

मध्ये जाता क्षुभितमनसां
गद्गदुक्तिं † गतानां
दीनालोकैः‡ प्रथमजटिला,
भूस्ततो विस्मयानाम् ।

* "The Banks will be closed and all business suspended."—*London Telegram, January* 28. "The Governor-general in Council hereby directs that all offices of government throughout India be closed and trusts that all subjects of His Majesty will abstain from doing business."—*Gazette of India*.

† God ! God !!

‡ आलोकः – दृष्टिपातः ।

भानोः स्यन्दनपरिगता
चन्द्राभागाकवन्धे*
राज्ञ्याः प्राज्ञ्याः सुगतिरभवत्
झम्पया†न्यैरदृश्या ॥ ५८ ॥

एकाकिन्यबला भवाब्धिजलधे-
स्तीरे पदातिर्गता
हर्षाद्बद्धपरिच्छदा गतपथं
दृष्ट्वेव चाग्रे रथम् ।
किञ्चिद्ध्यानवतीव वारिधितटा-
दुत्कृष्टया झम्पया
लोकानामुदगात्पुरातनगतिं
बिभ्रत्युदारां द्युतिम् ॥ ५९ ॥

इति श्रीश्रीश्वरीये विजयिनीकाव्ये विजयिनी-
तिरोभावो नाम षष्ठः सर्गः ।

* रथसप्तम्यां माघे चन्द्रभागाजले उषसि सूर्य्यझम्पनमिति पौराणिकी लौकिकी च गाथा ।

† झम्पा—झम्पनम् । तथाच शिष्टप्रयोगः—"पुच्छास्फोटदलत्समुद्रविवरैः पातालझम्पाश्च ताः ॥"





# सप्तमः सर्गः ।

दीर्घं राज्यमुपास्य शास्त्र-विधिना
　　चाश्वास्य सर्व्वाः प्रजा-
श्चन्द्रीयञ्च यशो विहस्य यशसा,
　　विध्वस्त-शत्रु-व्रजा ।
कृत्वाज्ञाश्च नरेन्द्र-राज-मुकुटे
　　मालाः प्रफुल्लाम्बुजा
राज्ञी साद्य विसर्ज्जनं गतवती
　　देवीव हा ! दिग्भुजा * ॥ १ ॥

खृष्टस्य भो विंशशताख्यवर्ष !
त्वां प्राप्य को नाद्य विलुप्तहर्षः ? ।
राज्ञीति मातेति जनेन गीता
त्वय्येव सा हन्त ! लयं परीता † ॥ २ ॥

---

* दिग्भुजा देवी—दशभुजा दुर्गा इत्यर्थः ।

† खृष्टीय-विंशशताब्द्या एव प्रारम्भे विजयिन्यास्तिरोभावादितदुक्तम् ।

या सर्व्वभव्येषु * सदानुरक्ता
कुभव्यमालोकयितुं न शक्ता ।
सालोचयन्तीव तव प्रसूतं
फलं, जहारात्मवपुः सुपूतम् ॥ ३ ॥

निपीय रोगादि-विषादि भारतं
प्रशान्तयामास च याप्यनारतम् ।
अगोचरे तां नयता विपद्धता
कृतान्त-दुष्टेन न का क्षतिः कृता ? ॥ ४ ॥

विना तु यामद्य वनान्तरे गजा
भ्रमन्त्यसुस्था इव भारते प्रजाः ।
पुनर्न सायास्यति भारतं प्रति,
क्षताद्य हा ! भारत-भाग्यसम्भूतिः ॥ ५ ॥

विधातुमर्हां शिरसा नमस्क्रिया-
मिमां स्रजं रत्नमयीं "मविण्डिया" † ।
वर्तेण्डियान् ‡ यत्कृपया सुशिक्षितः
स्मरन् स्मरंस्तां न च कः सुदुःखितः ? ॥ ६ ॥

---

* भव्यं—शुभम् । कर्त्तरि निपातनेे कृत्यप्रत्ययः (पाणिनिः ३।४।६८) । Vide Canto III., 12 :—"तेनैव भव्या शुभता सदाता" (अत्र तु भव्या—योग्या) । भव्यं शुभे च सत्ये च योग्ये भाविनि च त्रिषु" ।

† अविण्डिया = Of India = भारतस्य । भारतस्य रत्नमालिकेयमासीदित्यर्थः ।

‡ इण्डियान् = The Indian. भारतवासी जन इत्यर्थः ।

इयं पुनः "ष्टार्" * गगनेऽप्यविखिण्डया
भुवं समुद्दीपयते स्म सुश्रिया ।
तया धरासन्नतया निपाततः
कृतो भवोऽयं तमसेव चाततः ॥ ७ ॥

अपि न सा महिषी भुवि केवलं
जनपदेष्विव मातृभवं बलम् † ।
कृतपदा कपटांश-वह्निःस्थले
शशिकलेव जनौषधि-मण्डले ॥ ८ ॥

जगति वत्सगणेष्वतिवत्सला
वितमसा विधिना रचिताऽबला ।
भववने विषमे सरला नवा
मधुलतेव च शान्तिवनोद्भवा ॥ ९ ॥

विषमं खलु काल-धर्षणं
यदुदस्तीकृत-मातृदर्शनम् ! ।
सहसाद्य शुचानया जगत्
कृतमुच्चैरथ नाम दुःखवत् ॥ १० ॥

* ष्टार् = Star = नक्षत्ररूपिणी । इयं भारतस्य गगने नक्षत्ररूपिण्यासीदित्यर्थः ।

† इयं लोकानां मातेवासीदिति भावः ।

अयि ! कुत्र गता विहाय नः-
स्तव मातर्विमुखः प्रजाजनः ।
विलपत्यनिशं मुहुर्मुहु-
र्गुरु-शोक-व्यथया स-हाहहः ! * ॥ ११ ॥

क्व नु तेऽद्य कहीनुरो मणिः ? †
निहितेयं क्व च वा त्वयावनिः ? ।
सकलं भुवि पुत्त्रसात्कृतं !
ननु किं द्रव्यमितस्त्वयाहृतम् ? ‡ ॥ १२ ॥

अयि मातरितः क्व विद्रुता ?
जगतः पश्य शुभे ! द्युतिश्च्युता ! ।
तव पुत्त्रगणाश्च भारता§-
श्चिरकालं महिषि ! क्षतिं गताः ! ॥ १३ ॥

यदिदं तनयस्य ते नवं
ननु राजासनमुच्च-गौरवम् ।
न च तत् सुखदोचितं जना-
स्तव शोकाश्रुभिराविलेक्षणाः ॥ १४ ॥

* स-हाहहः:—विलापध्वनिभिः सह वर्त्तमान इत्यर्थः ।

† For a description of "Kohinoor," Vide Canto X.

‡ न किमपि त्वया आहृतमित्यर्थः ।

§ "जनपदे लुबिति" तद्धितप्रत्ययस्य लोपः,"लुपि युक्तवद्व्यक्तिवचने" इति बहुवचनञ्च ।

यं यातासि भुवो विहाय वसतिं
को नाम देशः स ते ?
पुत्र-स्नेह-शतं निरस्य जननी
संक्रन्दयन्ती प्रजाः ।
दुःखार्त्तं सकलं न पश्यसि कथं ?
मातर्जगद्रोदिति
भ्रष्टा शान्तिरधोमुखी, कुरु कृपा-
मेह्येकवारेक्षणम् * ॥ १५ ॥

या च्छायाफलिनीव या च करुणा-
कान्तारमध्योद्भवा
दीनार्त्तेन्धिन-धूम-केतन-शिखा,
या राज्यरक्षौषधिः ।
सा नास्तीति विषादितस्य जगतो
नम्रोत्तमाङ्गं शुभे !
का चाश्वास्यति हर्षपूर्णहृदया
हा ! त्वां विना मातरम् ? ॥ १६ ॥

---

* एह्येकवारेक्षणम्—सकृद्दर्शनं देहीत्यर्थः ।

साशीतिद्वयवर्षभागपि नवा, *
प्रेक्ष्येव देशेतिका†-
मात्मास्त्रेण निकृत्तन्, शान्तिकमलां
संस्थाप्य चासीर्मुदा।
कैर्दोषैरिदमाधिपत्यमखिलं
त्यक्त्वा प्रियाः स्वाः प्रजा
निष्कारुण्यकलेव गच्छसि? शिशु-
क्रीडेव ते क्रीड़ितम्! ॥ १७ ॥

मातर्दीनजनालिदुर्गतिदशा-सन्दोहसन्नाशने
मुक्तावस्थ-दया-कपाट-पटिके! च्छाये! वटस्याध्वनि‡।
मध्याह्नार्कविमेघमण्डलकरोत्तप्ते जगन्मण्डले
का च्छायामवतारयेत्पृथुतरस्नेहा प्रजामस्तके?॥१८॥

यात्रासिद्धिकरीक्षणे फलमुखी
क्षेमङ्करीवाथ या
भूत्वैव द्रुसुखाभिषे घृतरसा
सा भूचरी खेचरी।

---

* "Even to the end she retained the freshness, the warmth of affection and the *energy of youth.*"—*Extract from the Viceroy's Speech at the Legislative Council.*

† ईतिकाम्—अतिवृष्टिप्रभृतिकाम्।

‡ मुक्तेत्यारभ्य पटिकेतिपर्य्यन्तं सम्बोधनपदम्। (क्लान्तानां सम्बन्धे) अध्वनि वटवृक्षस्य छिन्नच्छायेव त्वम्,—एतदपि सम्बोधनपदम्।

उड्डीना गगनेऽप्यलक्षितपदा *
जीर्णाद्द्रुमनीडतो
हा ! याता नृपतेरनेकसहच-
र्य्येकाकिनी कामिनी ! ॥ १९ ॥

सिक्ता भूर्विरहेण तेऽश्रुसलिलैर्नक्तं खगीवास्तवाक्,
श्टङ्गं भङ्गमिवैति किं हिमगिरेर्वातेऽल्पशो वाति वा ?
गम्भीरं रुदतः श्टणु ध्वनिमिमं नान्योऽद्य शब्दोऽम्बुधौ
कुर्व्वन्नाकुलमेव सर्व्वमटति त्वच्छ्वभङ्गध्वनिः ! ॥२०॥

मातर्मातरिति प्रमाद-पततां
संजल्पतां नित्यशः
स्नेहादेव तदुक्तिरेति विवरं
नाभ्येति वा श्रोत्रयोः † ।

* क्षेमङ्करीति—कल्याणप्रसूः प्रसिद्धनाम्नी पक्षिणी । तस्याः सादृश्यं विजयिन्यामारोपयति । उदीक्षणे—क्षेमङ्करीं यात्राकाले पश्यतां जनानां सा फलप्रसविनी भवति इत्यर्थः । क्षेमङ्करी हि आमिषे धृतरसेति प्रसिद्धं, विजयिन्यपि स्वर्गसुखे धृतरसा । क्षेमङ्करी यथा भूचरी खेचरी च, तथा विजयिन्यपि पूर्व्वं भूचरी, अधुना स्वर्गगमनकाले खेचरी । अलक्षितपदा—अलक्षितगतिः ; पक्षे उड्डयनकाले अन्यैरदृश्यचरणा ।

† हे मातः ! तव श्रोत्रयोः स मातर्मातरिति शब्दः अभ्येति न वा सम्प्रति इति भावः ।

सा कस्माच्चिरसंस्कृतिः स्मृतिपथं
त्यक्त्वा व्रजेद्विस्मृतिम् ?
कष्टं किन्तु चिरायते प्रजजनं *
संच्छाद्य नित्यं स्थितम् ॥ २१ ॥
आकाशात्कमलालयाज्जलनिधे-
र्नक्षत्रराज्याच्च वा
का देवी "बिबि"रित्युपाधिपिहिता
जाता महीमण्डले ? ।
वाग्वल्लीञ्च ततो मनुष्यविपिने
मिथ्या-वचः-पुष्पितां
दृष्ट्वा सत्यपरायणा किमु हठा-
द्रास्से गतान्तर्हितिम् ? † ॥ २२ ॥
इन्द्राणी जगताञ्च या प्रियसखी-
वासीः सखीनामिव
प्रौढश्रीः शशिनः कलङ्करहिता
बन्धुव्रजेन्दीवरे ।

---

* सा चिरसंस्कृतिः—प्रमादपतितानां जनानां मातर्मातरिति ध्वनिप्रादुर्भावरूपः संस्कारः । प्रजजनं—प्रजाम् ।

† सदा सत्यपरायणा त्वं किं मिथ्याकुलितं भुवनं दृष्ट्वा अन्तर्हितासीः इत्यर्थः ।

प्राजेये* विपिने फलप्रदलता
मातेव या स्नेहतस्
सा नष्टापि न नश्यसीति परया
कीर्त्त्यैव संजीवसि ! ॥ २३ ॥
एकत्र प्रलयोऽन्यतः समुदयः†
प्राग्वत् क्रियापल्लवै-
र्लीलेयं जगदीश्वरस्य भुवने
नित्या नवा घूर्णते ।
ईरूपे‡ भुवि लण्डनादि§सहिते
त्वं भारतादौ पुनः
साम्राज्ये रचितासि¶ कुत्रचिदहो
सम्राट्प्रिया सुन्दरी ॥ २४ ॥
सादृश्यं तव नास्ति‖, या च कविभि-
स्तद्दृश्यतो गीयते
सर्व्वाङ्गेऽपि च भारतस्य च भुवः
खण्डेऽद्य लण्डे क्व तत् ? ।

* प्राजेये—प्रजासम्बन्धिनि । † प्रलयः—तिरोभावः । समुदयः—आविर्भावः ।
‡ Europe § London. ¶ रचिता—कृतजन्मपरिग्रहा सम्प्रति ।
‖ "The British empire has had no such queen, gracious, wise, dignified, symbolising all that was most enlightened and progressive, of pure and stainless life. India, in its long cycles, has had no such Empress, tender-hearted, large-

जानक्याः कियदेव चारुचरितं,
किञ्चिच्च धर्म्मस्त्रियो
लीलायाः कियदस्ति, किञ्चिदपि ते
तद्भानुमत्या अपि ॥ २५ ॥
प्रागासीदृमयन्तिका नलबधूः
प्रातःस्मृतावङ्गना
तद्वद्राक्षसराजपट्टमहिषी
मन्दोदरी सुन्दरी ।
ताराद्याश्च ; हि तत्र तत्र लसिता-
न्युद्वीक्ष्य नामाक्षरा-
ण्यस्माभिः स्मृतिपुस्तके तव कृतं
नामाद्य संगुम्फितम् ॥ २६ ॥
उत्तुङ्गैर्विभवैरनन्तसुखिनी
दुःखं न वेत्ति स्म या
या कल्याणपरम्पराभिरभितो
वृद्धिं गता पीवरीम् ।

---

minded, just, humane, the loving parent of her subjects of every race and clime."—*Extract from the Viceroy's Speech at the Imperial Legislative Council.*

सा यत्रैव च तत्र भारतगिरि-
स्तत्रैव भूमण्डला*-
नीत्यालोच्य मुदा भ्रमेण च यमे-
नाक्काय नीता हि सा ॥ २७ ॥
त्वामानीय महेन्द्र-गौरवमधः-
कर्त्तुं यमेनेच्छता
व्यग्रेणैव हृतामुनासि विमला
भूमण्डलाखण्डला ।
स्वर्गं त्वामभिपश्यतोऽस्य च ततः
शून्यं त्वया स्वालयं
स्पर्द्धेन्द्रेण हृता ; लुलापकगता
घण्टैव सा केवलम् ! † ॥ २८ ॥
हा ! कुत्राद्य धराविशल्यकरणी ?
कुत्राद्य सञ्जीवनी ?
कुत्राप्यद्य तथा विषौषधमणिः ?
क्वाब्धेः सुधा पावनी ? ।

* तदानयनेनैव सर्व्वं कृतान्तनगरे आनीतं भविष्यतीति आलोच्येत्यर्थः ।

† त्वन्तु स्वर्गं गतवती, न तु यमालयम् ; अतः यमस्य आशायाः साफल्यं न इति भावः ।

कल्याणीः फलिनीर्जगज्जनपदा-
न्नीत्वा वह्निः, कुत्र ताः ? *
किं नामेह कृतं न धातरधुना ?
शान्तिः कृताऽवाङ्मुखी ! ॥ २९ ॥

एकस्या विरहेण सर्व्वमखिलं
शश्वद्विषण्णीकृतं
स्कन्धे दुर्व्वहमावह स्वयमिमं
भूराज्यभारं विभो ! ।
त्वत्पुर्य्यां किमहो ! विधातरधुना
साम्राज्यपायास्त्रुटि? †-
स्तेनैषा कलिता ‡ त्वया हितकरी
श्रीराजराजेश्वरी ! ॥ ३० ॥

या काराभिधमेव बन्धनगृहं
दंशादिकानां सदा
कीटानामथ वारिवर्षणघटा
यस्या बभौ प्रस्फुटा ।

---

* कल्याणीर्विशल्यकरण्यादिफलिनीर्लोकलोचनेभ्यो वह्निर्नीत्वा कुत्र ताः स्थापिताः सम्प्रतीति कविः विधातारं खेदोन्मत्ता पृच्छति ।

† साम्राज्यपालिकायास्तस्याः विजयिन्या इत्यर्थः । त्रुटिः—अभाव इत्यर्थः ।

‡ कलिता—ग्रहणीयं नीता, तद्राज्यपालनार्थमित्यर्थः ।

छायास्निग्धतमा च पुष्पखचिता
सा पाटलाख्याटवी
नष्टा हा! मशकर्द्दितो निजकरै-
र्गण्डे जगत्ताड़ितम्! * ॥ ३१ ॥
दण्डे श्वासनिरोधनेन रचिते †
या चेच्छयासीत् सुधा,
याञ्चाघोषणदुन्दुभिध्वनिरिव
द्वारे प्रजानां वहिः ‡ ।
दस्यूनामथ तस्करस्य च पुनः
कारा च या जीवनं
सा नास्तीति जिगीषयारिरसकृत्
कालञ्च हा! प्रेक्ष्यते ॥ ३२ ॥
नष्टां शून्य-तमः-समष्टिरथवा
चक्षुर्जलं शोचतां
शत्रूणामपि मस्तकस्य सहसा
संस्तम्भनप्रक्रिया! ।

* या दंशमशकादीनामेकत्र-बन्धनचैत्रभूता पाटलाटवीवासीत्, इदानीन्तदटवीध्वंसात् दंशमशकादीनां पुनरपि सञ्चारभीतिः सम्भाव्यते। यच्छासनमहिम्ना दस्युतस्करादीनां सञ्चारो नासीदिति निर्गलितार्थः। मशकर्द्दितः—मशकादीनां वृद्धिभयात्।

† श्वासनिरोधनेन रचिते दण्डे—फाँसिकाष्ठे इति भाषा। The Gibbet.

‡ This refers to the Great Magna Charta of India of 1858 (Vide Canto IV., 49).

कम्पो वा पुनरेव भारतभुवः
काामं स-कोलाहलैः
सर्व्वग्रासकरः कुतोऽयमटति
त्वच्छत्रभङ्गध्वनिः ? ॥ ३३ ॥

शुष्का स्यास्यति वा न वेति महती
वङ्गेऽद्य गङ्गानदी !
पश्चाद्याश्च तटद्विषः कलकलै-
रुद्वेजयन्ते श्रुतिम् ! ।
पाश्चात्येऽपि च सैव दुर्द्दिनकथा ! *
भूयः किमावेद्यते ?
भङ्गाट्टालकगोपुरं हि जगतः !
कष्टं किमस्मात्परम् ? ॥ ३४ ॥

एतावत्यथ निष्ठिकेति † जगता-
मब्विन्दुवच्चञ्चला ! ‡
सर्व्वं दुःस्वप्नमिव, श्रमो हि विफलो,
देशोन्नतिः किम्फला ? ।

---

* दुष्टानां जगति स्थितिः, मङ्गलालयानान्तु तिरोभावः । पाश्चात्येऽपि वा मङ्गलालय-तिरोधानरूपा दुर्द्दिनकथा सम्प्रति आगतेति तात्पर्य्यार्थः ।

† निष्ठिका—परिसमाप्तिः ।

‡ अब्विन्दुवत्—जलबिन्दुवत् इत्यर्थः ।

भो भो भारतवासिनः ! श्रुतमिदम् ?
 बभ्रन्तु चित्तं शनै-
र्हा ! कष्टं शतकोटिरोदनरवै-
 र्नाभ्येति तद् यद्गतम् ! ॥ ३५ ॥

अस्मिन् ये जगदुन्नतौ धृतरसा
 ये चोपकारे रता
धन्यास्ते, शुभमस्तु, ये च सततं
 कुर्व्वन्ति चेष्टां शुभाम् ।
येनैकेन * विडम्बितं जगदिदं
 निर्वाक् च सन्दूषितं
तद्भङ्गाय किमौषधं, न च सभा
 तस्यार्थमाहूयते ? ॥ ३६ ॥

खृष्टादेर्महिमादयः प्रकटिता
 याः सर्व्वजात्याननै,
यास्तज्जातविभूतयोऽपि च, तथा
 भौती कथा तद्गता ।

* येनैकेनेति—विजयिनीतिरोधानरूपेणामङ्गलेन इति भावः ।

तद्-विश्वासगिला तु संशय-जरत्-
कन्याहृताऽन्तश्चरी
सर्व्वं चर्व्वति हा! भ्रमाश्रपवधूः,
सत्यञ्च हा! कम्पते*॥ ३७॥

सन्देहो बलवान् न विश्वसिति को-
ऽप्यस्मिन्नतीतां गिरं,
याता भूतकथा विभूति-पुटिता
दूरेऽवतारैः समम्।
देशा वाद-वितण्डया कवलिताः,
सत्योद्धृतिर्दुर्लभा;
सा त्वं† हा! क्व गतेह्यगेऽसि विषमे
या खृष्टविश्वासिनी?॥ ३८॥

सन्देहादितुषारपातगलिता
विश्वासपद्मश्रियो,
हा! दुःखं जनयत्यसत्यवचनं
सत्यप्रियाणां नृणाम्!।

---

* अधुना षड्भिः श्लोकैः, लोकानामवतारालौकिकघटनाप्रत्यये अनास्थां कथयितुं प्रस्तूयते। तद्गता भीतौ कथा—खृष्टस्यालौकिकातीतघटनापरम्परा इत्यर्थः। तज्जात-विभूतयः—खृष्टस्य कीर्त्तिकलापादय इत्यर्थः। भ्रमाश्रपवधूः—भ्रमरूपनिशाचरी-त्यर्थः। खृष्टादीनामवताराणाम् अलौकिकवृत्तान्तप्रत्यये सम्प्रति लोकानामविश्वासो दृश्यते; अतो सन्देहात्मानः साम्प्रतिका लोकाः किमपि न विश्वसन्तीति तात्पर्य्यार्थः।

† सा त्वमिति—विजयिनीमभिप्रेत्य उक्तम्।

क्वचैतच्च निवेद्यते ? नृप-पदे
त्वं नासि शान्तिप्रदा !
खृष्टादेरिव किं तवापि भविता
दोलायिता संस्थितिः ?* ॥ ३९ ॥

कः कं स्तौति मृषा निरुक्तिनिकरै-
र्नोद्वीक्ष्य तद्भूतिकाम् ?
सर्व्वा एव च जातयः किमु न ता
धान्यान्नभुक्तिं गताः ? ।
सत्यानामपि घोषणासु वदनं
येषां विलम्बायते
ते मिथ्याभिविलिख्य पुस्तकदले
केऽपि भ्रमानाययुः ?† ॥ ४० ॥

खृष्टादिस्त्ववतार एष सुदृढ़ः
साक्ष्यैर्जगज्जातिजै-
स्तद्भूतित्वमपि प्रतीतिविषयं
तत्तन्निमित्तं यतः ।

* किं भविष्यति काले तवाप्यस्तित्वविषये लोकानां सन्देहो भविष्यतीति शङ्कते ।

† पुस्तकादिषु यदतीतपुरुषाणां घटना निबद्धा दृश्यते, तत् मिथ्या भवितुं नार्हति । ऐश्वर्य्यादिकं प्रत्यक्षीकृत्यैव तद्वृत्तान्ताः लिपिबद्धाः ग्रन्थकृद्भिः, अन्यथा सत्यप्रियास्ते कथं मिथ्या रटयिष्यन्तीति तात्पर्य्यार्थः ।

ऐश्वर्य्यैरवतारताऽवतरति,
चौग्या यथा राजता ;
भृत्यंशे च वहिष्कृते क्व नृपता ?
सर्व्वे समाना जनाः * ॥ ४१ ॥
विश्वासाद्बहुदूरराज्यवसते-
र्भान्त्या गृहीताज्जनात्
यस्मान्नालभते किमन्यदधिकं
मानं स्थिरोऽपीश्वरः ! ।
त्वत्सत्ताप्यवतारवत् समयतः
किन्तेन विश्वास्यते ?
तद्भङ्गाय सकृद्भवाद्य कृपया
स्वप्नप्रदा सूनवे † ॥ ४२ ॥
स्त्रीजातिर्यदि कुत्रचिद्भुवि भवेत्
सम्राट्पदेऽधिष्ठिता
तद्राज्ये नृप-भक्तिभिर्जवनिका-
पातो न च श्रेयसाम् ।

* ऐश्वर्य्यं विभूत्यादिकमभिवीक्ष्यैव अवतारादौ लोकः विश्वसिति, नान्यथा। नृपत्वमपि तद्वत् ऐश्वर्य्यमण्डितमेव लोकप्रत्ययकारकं भवति। त्वन्तु सर्व्वैश्वर्य्यमण्डिता आसी-रतो लोकप्रत्यये सन्देहो नासीति निर्गलितार्थः। राजता—नृपत्वमित्यर्थः। भृत्यंशे—ऐश्वर्य्यांशे इत्यर्थः।

† अविश्वाससंदृश्य एव प्रताप: यदीश्वरास्तित्वमात्रेऽपि सन्देहो जायते। अतः लोका-स्त्वापि अस्तित्वविषये सन्देहाक्रान्ता भविष्यन्तीति तदपनोदनाय त्वं पुत्राय स्वप्नप्रदा भवेति तात्पर्य्यार्थः।

एष त्वद्विरहः प्रमाणयति तत्,
येनाभिभूतो जन-
स्त्वामेव स्मरतीति सर्व्वमनसा,
त्वां तां पुनः शोचति ॥ ४३ ॥

लण्डे* प्रागेलिजावेथ्† समजनि महिषी
ख्यातकीर्त्तिः पुरैका
तत्प्रेतात्मा कदाचिद्भवति यदि जनै-
रप्यदृश्योऽपि दृष्टः ।
भूपानामप्यशान्तिं भयमपि जनयेत्
ल्लावयेद्वासृजा गा-
मित्येवाद्यापि राज्ञः पुरि फलितफला
किंवदन्तीयुरूपे‡ ॥ ४४ ॥

तं दृष्ट्वा या त्रिवर्षादुपरि स्रततिथेः
किंवदन्त्या विभीता,
श्रेयः-प्रेयेऽ§प्यथासीद्धृतमतिरसकृत्
तत्क्षणं त्वं प्रजानाम् ।

---

* लण्डे—इंलण्डे (England), Vide note on Canto I., 23.

† एलिजावेथ्—Elizabeth (Queen).

‡ इयुरूपे—Europe. This story got abroad after the death of the Queen through the news-papers.

§ श्रेयः-प्रेये—"येषाञ्च विरोधः शाश्वतिकः" इत्यनेन द्वन्द्वैकवद्भावः। तं—प्रेतात्मानमित्यर्थः।

ईर्ष्याध्यानाभिमग्ना प्रकृतिचयहिते
तुच्छयन्त्यात्मविश्वं,
सा त्वं क्वासि मातः करुणमयि ! गता
ताः प्रजा वञ्चयित्वा ? ॥ ४५ ॥
(युग्मकम् ।)

यस्मिंस्तिष्ठसि तिष्ठ तिष्ठ सततं
तत्रैव च स्वेच्छया
स्वाहस्थ्याः पुनरीक्षणं विधिकृतं
प्रागेव दूरीकृतम् ।
एकं प्रार्थयते प्रजा शुचिगता
संवत्सराभ्यन्तरे
पत्रन्त्वत्करनिर्म्मितं, न च कथं
तस्मिन् वदान्यायसे ? ॥ ४६ ॥
गुड्-मर्णिं* न भवत्यहो ! सुशिथिला
कार्य्यै गतिर्व्यज्यते,
प्राप्यं नाम धनं न चेच्छति जनात्
त्वच्छोकदुःखी जनः ।

* गुड्-मर्णिं—Good-morning.

एतान्येव वदन्ति केवलमिमे
    लोका भृशं दुःखिताः—
'ष्टार् मादार् किमविण्डिया ? जनगति-
    र्हा ! बेनिफेक्ट्रेस् नु किम् ?' * ॥ ४७ ॥
सेनाभिः परिरक्षिता नलबलै† -
    रभ्रंलिहे मन्दिरे
वैद्याद्यैश्च सुशिक्षितैः प्रतिपदं
    या चौषधैः सेविता।
अर्थश्रीरपि यां ररक्ष सततं
    पार्श्वोपविष्टेव सा
हा ! तस्या निधने जगत्पुनरिदं
    नास्त्येव नास्त्येव नः ! ॥ ४८ ॥
अश्रद्धेयमिदं तवाद्य निधनं,
    प्रत्येति तत्कोऽन्तरे ?
या चैका प्रतिमूर्त्तिकोटिवितता
    वक्तीव माध्वीं गिरम्।

* ष्टार्—Star. मादार्—Mother. अविण्डिया—Of India. बेनिफेक्ट्रेस्—Benefactress.

† नल—नालिकास्त्रम्।

श्रान्ता नाम किमद्य राज्य-धुरया
फग्मोर*-संज्ञे स्थले
निद्रास्येव सुखप्रसुप्तिरसिका
पत्या समं सुन्दरी ? ॥ ४९ ॥

पुत्त्रेणेव गणाधिपेन महता
सेनाधिपेनान्वितः†
प्रेत्यामुत्र निषेविता च सततं
श्रीभ्याञ्च या पार्श्वयोः ।
आसीना बलवद्द्विपच्छमहिष-
स्कन्धे त्रिभङ्गाकृति-
र्हासन्नाद्य शरत्, शिवद्युतिमती
सा कुत्र दुर्गा-सती ? ॥ ५० ॥

इति श्रीश्रीशरीये विजयिनीकाव्ये
कवि-विलापो नाम सप्तमः सर्गः ।

---

* Frogmore (Vide Canto VI.)

† गणाधिपेन—गणेशेन ; पक्षे गणानाम् अधिपेन प्रभुणा । सेनाधिपेन पुत्त्रेण—कार्त्तिकेयेन ; पक्षे Duke of Cannaught. श्रीभ्यां—लक्ष्मीसरस्वतीभ्यां, पक्षे शोभाभ्याम् । शिवः—महादेवः ; पक्षे शिवद्युतिः—मङ्गलद्युतिः ।





# अष्टमः सर्गः ।

महामहिष्याः प्रथमः सुपुत्त्रः
संस्थाप्य यं साऽस्तमगाद्मुत्र ।
महामहिम्ना भुवि यो विशालो
जयत्यसौ सम्प्रति राज्यपालः ॥ १ ॥

अयं महिष्याः प्रथमः कुमारः
पृथ्विश्रियां यस्य गृहीतभारः ।
स एड्ओयार्ड् सप्तम * एष राजा
निषेव्यतेऽतीवविभूतिभाजा ॥ २ ॥

भूमण्डलाखण्डलवद्विभाता
भिक्टोरिया † यस्य बभूव माता ।
यो द्योतते चारु-यशः-प्रपञ्चे
हिताय सर्व्वस्य स राजमञ्चे ॥ ३ ॥

---

* King Edward VII. (इत आरभ्य श्रीमत्सम्राट्पतेर्व्वंशविवाहादिकथा वर्ण्यते (१—११)।

† (Queen) Victoria.

स एष जातः समुदीर्णराज्ये
भिक्टोरिया-रत्नगुहानिकाय्ये * ।
ब्रह्माब्धिजीवेश्वरखृष्टवर्षे †
नभेम्बरे ‡ मासि नृणां प्रहर्षे ॥ ४ ॥

नभेम्बरे मासि नवे नवाह्ने
मुदा सुसज्जीकृतसर्व्ववाह्ने ।
राज्ञ्याज्ञया किं न बभूव कृत्यं
दृष्ट्वा हि सन्तानमिमञ्च पित्र्यम् ? ॥ ५ ॥

नाम्ना वकिंहाम§-महोच्च-हर्म्यं
तज्जन्मना रम्यतराञ्च रम्यम् ¶ ।
विचित्र-चित्रं, मणिरत्नहारं
दधज्ज्वलद्यच्च शतप्रकारम् ॥ ६ ॥

* निकाय्ये—गृहे ।　　† १८४१ खृष्टाब्दे ।

‡ November.

§ Buckimham Palace. "*Buckimham Palace*, the town-residence of Queen Victoria, occupies the site of Buckimham House. The present building in the classic style was erected in 1825—35 by Nash. The *Picture-gallery* contains a specially fine collection of pictures by the great Dutch masters."—*Encyclopedia Britannica.*

¶ रम्यम्—बभूवेति शेषः ।

हर्षैः प्रयातेऽपि च कालजाले
पुनश्च यस्यैव विवाहकाले।
अभन्मुदा पात्रगता परीक्षा
विसिस्मिये वीक्ष्य जनोऽस्य शिक्षाः * ॥ ७ ॥

परीक्षणेष्वात्मगुणप्रभावतः
नमत्तुलाकोटिरभूत् स भारतः †।
ततो जहर्षातितरां सदःस्थलं
सपाणिवाद्यञ्च बभौ कुतूहलम् ॥ ८ ॥

डेन्मार्क‡राजेन्द्रसुता प्रहस्य
करं दधारात्मकरेण तस्य।
सा वल्लभा,ऽस्याश्च स वल्लभोऽभूत्
ततः प्रभृत्येव तयोर्बभौ मुत् ॥ ९ ॥

अविन्द्वब्धिन्दुमिते खमेके
खृष्टस्य षट्कालक्षतातिरेके §।
मार्च्चे¶ दशाहे स्फुटपद्ममस्याः
स एड्ओयार्ड् पाणिमुवाह तस्याः ॥ १० ॥

* "The training of the Prince of Wales (the new king) was carried on under his own (Prince Albert's) superintendence; and it may be questioned whether so much wisdom and care was ever bestowed on the upbringing of an heir to the British throne."—*Ibid.* † सः—पात्र इत्यर्थः। भारतः—गुणानां भारेण।

‡ Denmark. § १८६१ खृष्टाब्दे। खमेके—वर्षे। ¶ March.

डेन्मार्कराजेन्द्रसुताऽस्य राज्ञी,
स्वयं स्वधर्म्मप्रवणस्य वाग्मी ।
साऽसावसावेकमतप्रपाती
तडित्तडिद्वानिव संविभाति ॥ ११ ॥

नदीव तं प्राप्य नदीशमेषा
दिने दिने नूतनरूपवेशा ।
प्रव्याकृतास्यार्पितविश्वजालं *
दिगीश्वरी सा प्रनिनाय कालम् ॥ १२ ॥

या स्वर्गजेवास्ति न लोकजेव
यालेकजेण्ड्रेति † समाख्ययेव ।
सा तस्य भूपस्य विवाहपात्री
भूसिन्धुपुत्रीव सती सुगात्री ॥ १३ ॥

सुचारुमध्यं कृशमादधाना
या स्वर्णवर्णेन विराजमाना ।
देवीव "बीबीति"‡-समाख्यया सा
श्रिया च सन्दीप्तिमती सुभासा ॥ १४ ॥

* प्रव्याकृतं विकृतीभूतं यदास्यं मुखं तस्मिन्नेव अर्पितं विश्वजालं येन (कालेन) तमित्यर्थः । (इत आरभ्य राज्ञ्या आलेकजेण्ड्राया: वर्णनं क्रियते, १२—२६) ।

† Alexandra (Queen).

‡ बीबीति भाषा । इंलण्डीयनारीत्यर्थः ।

या रत्नगर्भा सधवा सपुत्त्रा
गृहीतसर्व्वोच्चविवाहसूत्रा ।
अनन्यशोभा पतिवल्लभा च
दधाति सर्व्वञ्च सुमिष्टवाचः ॥ १५ ॥

आलेकजेण्ड्रा सहचर्य्युदारा
सा मन्त्रिणीवास्य शुभाभिसारा ।
पट्टस्य राज्ञी च सुशंसनीया
तथा दयामूर्त्तिरमानवीया ॥ १६ ॥

सैषा सुदृश्या तिलपुष्पनासा
स्मेरा च सर्व्वाङ्गविलग्नवासाः ।
छायेव राज्ञोऽङ्कचरी सखीव
प्रागजन्मविद्या ननु सम्मुखीव ॥ १७ ॥

या सुन्दरी चारुतिलोत्तमेव
राज्ञोऽस्य भूयाप्यभिभाविकेव ।
सौभाग्यकुण्डेषु कृताभिषेका
सर्व्वेषु कार्य्येषु लसद्विवेका ॥ १८ ॥

आलोकजेन्द्रायुधपञ्चवर्णा *
वासोभि,-रन्यैर्मणिपुष्पकर्णा ।
प्रिया च राज्ञः प्रियवाग्वयस्था
राज्ञीषु सर्व्वास्वधुना यमस्था † ॥ १९ ॥

मुखेन तुङ्गा जितवारिजेन
धृतास्यविम्बा नखदर्पणेन ।
स्वकञ्चुकत्विड्भिरनेकमाना
विद्युल्लता-गौरवमादधाना ॥ २० ॥

स्वभाग्यमुद्दिश्य सपुष्पगुच्छा
करारविन्दे धृतमत्स्यपुच्छा ।
नारी वरा चारुतरा वरेण्या
सुसज्जिता भानुमतीव वेण्या ॥ २१ ॥

चित्तं विभूतौ प्रबलं यथाव-
द्दोषां पुनर्मानवजन्मभावः ।
मन्येऽद्य तेषामियमेव माता
योग्या, स्त्रियाख्या भवितुं विभाता ॥ २२ ॥

---

* आलोकनम् इन्द्रायुधम् इव पञ्चविधो वर्णो यस्या इत्यर्थः ।

† यमस्था—"तत्र साधु"रित्यनेन 'प्राग्घितात्' इति यत्प्रत्ययः । अथवा 'स्वर्गादिभ्यो य'दिति भाष्योक्तेः यमशब्दस्य स्वर्गादिगणे पाठात्, भवार्थे यत्प्रत्ययः ।

करादिरेखा खलु तादृशीनां
श्रियं विधत्तेऽभिमतां सुपीनाम्।
अगोचरे वा बुधगोचरे वा
सा तादृशी तद्गुण-तत्प्रभावा॥ २३॥

इयमेव विराजितभाग्यफला
भवभूमिचलेव सुधांशुकला।
इयमेव नवा नवचन्द्रमुखी
पतिरेवमिमामवलम्ब्य सुखी॥ २४॥

श्रियश्च किं कञ्चुलिकामतल्लिका?*
विरिञ्चमायाः किमु हेमवल्लिका?।
वियच्चला वा किमिहेन्दुचन्द्रिका?;
सुदूर-भास्वज्जय-वैजयन्तिका॥ २५॥

मनोमयीं रत्नकलामिवेषितु-
गुणं दधानाञ्च, कुलङ्करीं पितुः।
प्रजाऽवनव्यस्ततरः प्रजापति-
श्चकार किं तां जगतः परा गतिः?॥ २६॥

(कुलकम्।)

* मतल्लिका—प्रशस्तवाचकोऽयं शब्दः।

तया समं विंशशतोत्तमाङ्के
शिरोऽतिराञ्चाः * समये च साङ्के ।
खृष्टीयके, सम्प्रति धर्म्मभूपः
सुतो महिष्याः स बभूव भूपः ॥ २७ ॥

अदृष्टदोषस्त्वयं† माशुतोषः
सागःसु यस्यास्ति न कोऽपि रोषः ।
कृपा तटस्थे जलधावयान्ते
क्व स्थापयेद्भूः स्वपदं वतान्ते ? ॥ २८ ॥

यशोन्नतिध्यानतयेव धात्रा
सर्व्वाङ्गशोभा विहिता सुमात्रा ‡ ।
भाग्यं विजित्वान्यनृपस्य सर्व्वं-
मात्माकुलादेर्धनवच्च पर्व्व ॥ २९ ॥

यः सद्गुणाढ्यो मधुरोक्तिभाषी
तथैव सद्यौवनराज्यवासी ।
तिरोहितान्यव्यसनादिरेकः
सर्व्वप्रभुश्चापि लसद्विवेकः ॥ ३० ॥

---

* अतिराञ्चेति—"अञ्च पूजनात्" इत्यनेन पूजनार्थकत्वात् [illegible] । "अतिरति-क्रमणे च" इति सूत्रेण 'अतेः' पूजनार्थकत्वम् ।

† [illegible] श्रीमद्भवनपविवर्णनं क्रियते (२८—४७) ।

‡ सुमात्रेति—मात्रा परिच्छदः, धनिकांशं वा ।

वह्निः कदापीन्द्रगुणाच्च यो न,
क्षितीशसेव्यश्च सुदृश्यघोणः।
यशःप्रपूर्णावनिमध्यकोणः
स्फुरत्यसौ सन्निभया मघोनः॥ ३१ ॥

करग्रहाष्टापदसूचशक्त्या
निगुम्फिता चापि दृढ़ानुरक्त्या।
आलेकजेन्द्राख्यनरेन्द्रबाला
विधातृतस्तस्य च कण्ठमाला॥ ३२ ॥

पदे हृदि श्रीमति चारुमस्ते
राजाङ्कचिह्नं किल यस्य हस्ते।
द्वौ साम्प्रतं तेन च राजराजौ
जगत्यमुष्मिन् धनदौ* विराजौ॥ ३३ ॥

पठन्ति यस्येह ललाटपट्टे
न कोऽपि सन्दीपितराज्यहट्टे।
लसत्सुतादेः परिभुक्तभोगं
विधातृहस्तस्य लिपि-प्रयोगम्?॥ ३४ ॥

* नयनरपतेः कुवेरेण सह साम्यं वर्णयति।

स राजमञ्चासनसञ्चरिष्णु-
र्लसन्निदानीं द्विषतो* जयिष्णुः।
प्रजात्रुटिं यो यशसा क्षयिष्णु-
र्नाम्ना पुनर्भारतभूमिविष्णुः॥ ३५॥
उपर्य्यसौ भारतिनाञ्च पर्व्वत-
स्तलस्थरत्नाकर एव सर्व्वतः।
दूरं समुत्सृत्य जनो भवान्तरे
सुखैश्च दुःखैश्च नियुज्यतेऽन्तरे†॥ ३६॥
सभारतानां जगताञ्च शर्म्मणे
गृहीतभारो भुवि योऽद्य वर्म्मणे।
शुभाय धर्म्माय जयाय विद्विषां
शुभप्रभातेऽस्तु जयन् स दुर्निशाम्॥ ३७॥
द्विषसूनां यो भृशमङ्गमेजयः‡
प्रजाव्रजानाञ्च तथा शुभोदयः।
नृपाख्यनक्षत्रकुलैकचन्द्रमाः
स जीवतादेष शतं शतं समाः॥ ३८॥

(एकादशभिः कुलकम्।)

* द्विषतः—शत्रून्। "न लोकेत्यादिना" षष्ठीनिषेधात्, "गम्यादीनामुपसंख्यान"मिति द्वितीया। † सर्व्वेषां राजत एव दुःखसुखं भवतीति भावः। अन्तरे—अन्तःकरणे। भवान्तरे—भवमध्ये।

‡ अङ्गम् एजयतीति—अङ्गमेजयः, खश्।

अनुज्ञया मातुरिलां* सुमङ्गलः
स तामगृह्णादथ मातृवत्सलः ।
विधाय भूपालजनातिसर्ज्जनं
चकार मातुः प्रतिमाविसर्ज्जनम् ॥ ३९ ॥

धरा तु नृणामधिदेवतेव
योषित्सजातीयनिसर्गिकेव ।
अतोऽद्य सा सत्पुरुषानुरक्ता
न पूर्व्ववत् स्त्रीप्रभुताप्रसक्ता ॥ ४० ॥

नवञ्च सर्व्वं, नृपतिः पुनर्न्नवो
नृपान्तरेऽद्यापि न कोऽपि विप्लवः ।
उपस्थितं सम्प्रति भीतिखण्डनं
नवं धरित्र्याः पुनरेव मण्डनम्† ॥ ४१ ॥

प्राप्य स्थियन्तीं वयसा सषष्टि-
र्धत्ते च शत्रून्मथनाय यष्टीः ।
क्षेमेषु योगेषु च सम्प्रसक्तः
स्मरंश्च मातुः पदमेव भक्तः ॥ ४२ ॥

---

* इलाम्—पृथिवीं, राज्यभारमिति यावत् ।

† मण्डनम्—अलङ्कारः ।

श्रिया च युक्तः, प्रतिभापरायण,-
स्तथैव मातुश्च मनोऽभिनन्दनः ।
इति त्रयेणैव शुभेन संबभौ
शुभक्षणे तुङ्गगते जगद्रवौ ॥ ४३ ॥

शिखेव दीपस्य, सुवर्णभास्वरं
ससर्ज यं सूनुमिमं नृणां वरम् ।
पुपोष यं स्नेहशतेन दक्षिणा
महिष्यसौ शत्रु-भयस्य भक्षिणा ॥ ४४ ॥

बभूव स क्षत्त्रियवन्नरेशः
सद्वादशाहाशुचिरन्यवेशः ।
समुल्लसन्मातृदशोऽपि भूपः
स्थितस्तदन्त्येष्टिमुखे सुरूपः* ॥ ४५ ॥

यं प्राप्य तं गौश्च† सगौरवेयं
जगौ स्ववत्स्याननतस्य गेयम् ।
आनन्दमग्नेव विधूय शोकं
राज्ञीक्षते विह्वलितात्मलोकम् ॥ ४६ ॥

---

* जायमानादृदशस्यापि न रूपहानिरिति भावः ।

† गौः—पृथिवी ।

इत्यम्बरा चारुतरात्ममङ्गलं
विचिन्तयन्तीव दधाति यत्करम् ।
स चापि तां रञ्जयितुं नरेश्वरः
स्वयं चकास्तीव गृहीत-तत्करः ॥ ४७ ॥

प्रेमास्य यैर्यैः प्रबभूव हार्द्दं
तैस्तैरथात्मीयनृपैश्च सार्द्धम् ।
मात्रे स पर्य्यङ्कनिमग्नमूर्त्तौ
क्षेमं जगौ प्रेत्यसुखस्य पूर्त्यै * ॥ ४८ ॥

ततो धरापातितजानवस्ते
समावद''न्नीश ! नमो नमस्ते ।
कुरुष्व कल्याणमचेतनाया
राज्ञ्याः परासोः पतिलोकगायाः ॥ ४९ ॥

क्षमस्व तस्या यदि वास्ति पापं
निःशेषमुद्भूय मनोऽनुतापम् ।
नियोजयैनामधुनापि साते ;
ऋजुस्वभावेषु दयाऽधिका ते ॥ ५० ॥

* सम्प्रति श्रीमद्भवराजकृतं मातुरन्तिम-कृत्यं(Funeral obsequies) वर्ण्यते (४८-६५)।

दोष्मान् स एवासि न यस्य वाङ्क-
स्त्वां ब्रह्म चाल्लेति गडेति चाङ्कः*।
पश्यस्यचक्षुः, पदवानगन्ता,
चैतन्यरूपोऽसि, न तेऽस्ति हन्ता ॥ ५१ ॥

क्षुद्रादपि क्षुद्रतरोऽसि जीवः†
स्थितो वहिर्वाक्यपथादतीव।
गुरोर्गरीयांश्च, तवैव याचा—
स्वजन्मनेऽस्तीह विना विधात्रा ॥ ५२ ॥

यः केशकोटेः शतभागभाग-
स्तुच्छो यतः स्यात् सुमनः‡परागः।
जीवाणुराकाशतरङ्गमज्जः
स एव च त्वं धृतवायुसज्जः ॥ ५३ ॥

जानन् परात्मानमिवात्मभावः
संसारसिन्धाववलम्ब्य नावः।
सुखे च दुःखे कृतयोगदानं
ब्रह्मासि, तेऽब्रह्मतयाभिमानम् ॥ ५४ ॥

---

* ब्रह्मेति हिन्दवः, चाल्लेति यवनाः, गडेति इंरेजाः—वदन्ति।

† हे ब्रह्मन्, त्वमेव जीवरूपेण तिष्ठसि; जीवब्रह्मणोरभेदादिति भावः। "प्राणान् चेष्टारूपेण धारयतीति जीवः" इति शङ्करभाष्ये व्युत्पादितः।

‡ सुमनसां—पुष्पाणाम्।

त्वं स्वप्नमाया*-पुरुषोऽसि नाम्ना
नियन्त्रितः कर्म्मफलेन दाम्ना।
अस्मिन् प्रपञ्चे कतिकालवासी,
पूर्णीकृतां सृष्टिकृतेऽप्यहासीः॥ ५५॥

स्त्रीमूर्त्तिमत्यै† पुरुषस्य रत्यै
नमोऽस्तु तुभ्यं स्तनकेशवत्यै।
निरस्तमायाय सनातनाय
नमो नमस्ते पुरुषोत्तमाय‡॥ ५६॥

लभामहे नैव तवाद्य सङ्गं
नतोन्नतं केवलमुत्तमाङ्गम्।
अस्माकमस्मिन् नतिबन्धमुच्चै-
र्गृहाण सर्व्वेश्वर! पुष्पगुच्छैः॥ ५७॥

---

* शङ्करभाष्यं, छान्दोग्योपनिषदि ८ अध्यायः, १० खण्डं (१।२।१)।

† "लोकानामुपकारिण्यो बह्वीर्मूर्त्तीर्भजते इति अनेकमूर्त्तिरीश्वरः" (सहस्रनामशाङ्करभाष्ये, ८० श्लोकः)।

‡ पुरुषोत्तमायेति—"न निर्धारणे" इति षष्ठीनिषेधात्, सप्तमीसमासकरणे तु "हलदन्तात् सप्तम्या" इति सूत्रेण पुरुषेषु उत्तम इत्येवं स्यादतः शेषषष्ठ्या समासः। श्रीमच्छङ्करस्तु सहस्रनामभाष्ये इदमाह—"पुरुषाणामुत्तमः पुरुषोत्तमः; तत्र षष्ठीसमासप्रतिषेधो भवतीति जात्याद्यपेक्षया समर्थत्वात्। यत्र पुनर्जात्याद्यपेक्षया पृथक् क्रियते, तत्रासमर्थत्वान्निषेधः प्रवर्तते। यथा गवां कृष्णा सम्पन्नक्षीरतमा, मनुष्याणां क्षत्रियः शूरो मतः इत्येतेषु" (शाङ्करभाष्यम्)।

क सा शिलाचित् * कठिना दृढ़त्तरा ?
क चाणवोऽस्याः कुशकोटितो वराः ?।
क्रियावसानेऽपि च न श्रुतैकता †
निगद्य चैवं वत वादिनो गताः ! ॥ ५८ ॥

श्रुता कथा शोषयते च तालुं !
कं वा व्रजामः शरणं दयालुम् ?।
जगत्प्रभूहो न शृणोषि वाचः ‡
सास्तामतः केवलभक्तिका च ॥ ५९ ॥

नानामतं पल्लवितं सदालं
विजृम्भते नाथ ! ततः करालम्।
यतस्त्विदं तच विलीनमस्तु
ततो हि लभ्यं न पवित्रवस्तु § ॥ ६० ॥

---

* शिलाचित्—Vide योगवाशिष्ठः। चित्—परमात्मा ; अणवः—जीवात्मानः।

† क्रियावसाने जन्मादिक्रियावसानेऽपि ब्रह्मपरब्रह्मणा सह न चैकता श्रुता इत्यर्थः। ब्रह्मवस्तुन एतादृशमेव काठिन्यं प्राप्तिविषये इत्यर्थः। पूर्व्वतनानां वादिनामिदमेव मतम् इति शेषचरणार्थः (एतद्धि श्रीमद्रामानुजीयमतमिति द्रष्टव्यम्)।

‡ हे प्रभम्! त्वं जगत्प्रभूरूपोऽसि ; अस्माकमतितुच्छानां क्षुद्राणां कथां न शृणोषि। अतएव विविधवादिनात्वं, केवलैकान्तिकी भक्तिरेवास्तामिति भावः।

§ इदं नानाविधमतं यत उद्भूतं तत्रैव विलीनमस्तु। यतो हि तादृशमतप्रपञ्चेन पवित्रं ब्रह्मवस्तु न लभ्यं भवतीति भावः।

परात्परे चित्त-पथादगोचरे
प्रतीतिसिद्धे जगतः शुभङ्करे ।
वयं स्थिताः प्राप्तभयाश्चिराशया
तव प्रसादाभिमुखप्रतीक्षया ॥ ६१ ॥

स्थितस्य भुक्तिर्निधने च मुक्ति-
स्तव प्रसादस्य न कापि शक्तिः ? ।
यत्सर्व्वशक्तेः शुभ ! शक्तिमत्ता
न कुण्ठिता नाथ ! महाप्रवृत्ता ॥ ६२ ॥

काञ्चापि मूर्त्तिमनुगृह्य च भक्तजाले
भूमा * प्रसीदति स कारुणिके च काले ।
शक्तो भवेदथ विराड्-वचनानि सोढुं
साद्धचिह्नस्त इह को हि पुमान् विवोढुम् ?"॥६३॥

इतीरयित्वाञ्जलिमग्रमस्ते †
कृत्वा प्रणेमुर्युगपत्ततस्ते ।
शवप्रमाणैर्धनरत्नदानै-
राप्तीमलञ्चक्रुरतीव मानैः ॥ ६४ ॥

* यो वै "भूमा" तत् सुखं, नान्यत् सुखमस्तीति श्रुतिः ।
† Vide note on Canto V., 39, "त्वरासमाक्रान्तवचावकीर्णा" ।

इत्येवं परिणतिमात्मनोऽम्बिकायाः
सम्पाद्य चिन्तितक्षतस्तिरोहितायाः ।
भूपालो निजगृहमभ्युपेत्य, लोकं
शान्त्युक्त्या शममनयत्प्रगल्भशोकम् ॥ ६५ ॥

इति श्रीश्रीश्वरीये विजयिनीकाव्ये
श्रीमन्नवराजकृतप्रतिमाविसर्जनो
नाम षष्टमः सर्गः ।





# नवमः सर्गः ।

शोकस्तु* भारतपुरे गतिमानुदारः
सम्राडनवोऽप्यनवचन्द्रसुधावतारः ।
तौ द्वौ समानविभवौ रचिताधिकारौ,
जेतुं परस्परमिमाविव लब्धभारौ ॥ १ ॥

यदा यदा शोकसमाधिविस्तृति-
स्तदा तदा नूतनराजसंस्मृतिः ।
तयोर्द्वयोर्हर्षशुचोर्मुखं ततः
सुधाविषं द्वन्द्वगतं व्यदृश्यत ॥ २ ॥

शुचान्ततिः कृष्णमुखी तमोवहा
नरेन्द्रपत्नी शशिशुभ्रविग्रहा ।
अथैकतल्पे त्वनयोरवस्थितीः
प्रपश्यतामाविरभूच्चमत्कृतिः ॥ ३ ॥

* शोकः—राज्ञ्या वियोगजनितः ।

इयमपि कलिकाता वङ्गभूराजधानी
प्रथममतिविषण्णा भाषते न स्म वाणीः ।
तदनु तनुतराङ्ग्या तत्शुचा क्षप्यमाणा
प्रकटकृतविलापा व्याहरन्ती स्म नाना* ॥ ४ ॥

सद्यो विषण्णा स्म सुखं धुनीते
बलाहृता केवलशोकगीते ।
क्रयक्रियादौ शिथिलेव जाता
नाद्यापि या प्राङ्निभयास्ति भाता ॥ ५ ॥

शुचा स्खलद्दामदृशोऽवगुण्ठनं
न च क्व वाभूत् हरिनामकुण्ठनम् ।
शुभोन्मुखी सा शुभधावमाना
शुभाय चेष्टामकरोच्च नाना ॥ ६ ॥

क्वचित् सभा शुक्लतरा च दृष्टा
क्वचित्पुनर्नीलरुचाभिसृष्टा ।
एकत्र तल्पे रुदितञ्च हर्षः
सद्यो नराणां हृदयं चकर्ष ॥ ७ ॥

(कलापकम् ।)

* "From every quarter of India, news continues to arrive of unaffected grief and lamentation among all races and creeds. The feeling is that India has lost not merely a Queen but a Mother."—*Extract from the Telegraphic Correspondence that passed between the Viceroy and H. M.'s Secretary of State for India*, 26. 1. 1901.

नवनरपतिदृष्ट्या दुर्बले शोकरोगे
जनगणहृदयान्तः किञ्चिदाश्वासयोगे।
द्रुतमनु मनुजानां तत् स्थितानामगूढौ
युगपदभिभवन्तौ हर्षशोकौ विमूढौ॥ ८॥

राजच्छत्रसरोजराजिविलस-
द्दष्ठीतले निर्म्मले,
राज्ञ्यन्तर्ह्रितिशोकसङ्कमलिने
वङ्गादिभूमण्डले।
चूडा सर्व्वमहीभुजां नवनृप-
स्तेनाकुलोऽपि स्वतो
मिष्टं घोषण*मुच्चचार भगवान्
शान्त्यै प्रजानां ततः॥ ९॥

"नवमिह मम मातुः शोकदन्दं नृभीदं
व्यथयति जगदेतन्मांशु तन्मामपीदम्।
नियतिरियमुदग्रा स्यान्नवा वा नवा वा ?
वदत सकलवन्धाः! तत्त्वतः सत्स्वभावाः॥ १०॥

---

This proclamation was issued on the 4th February 1901, and sent to India, addressing the princes and people of India, from the Windsor Palace by the King-Emperor.

भारतवासिनां दृपतीन् प्रजाश्चन्दानि चोद्दिश्यमिदं घोषणम्।

किमिह्वमतिविषस्मा मौरवाः प्राप्तशोका
नयनसलिलभाजः खेदवन्तोऽद्य लोकाः ! ।
न जगति सुखमुच्चैर्दुःखमेवञ्च द्वन्द्वं
चिरयति मनुजानामायुषस्तुल्यकक्षम् * ॥ ११ ॥

इह हि जलमुचो ये नेत्रतः प्राप्तशोका-
स्तदपनयत वत्सा मैवमेतन्नृलोकाः ! ।
जगदिदमपि राज्ञ्या पालितं स्नेहदुग्धै-
र्विधुरितमिव मा भूत् तैस्तु तद्भक्तिमुग्धैः ॥१२॥

नयनजलमुचां या चाग्रगण्या मदम्बा
पुनरपि न भवेऽस्मिन्नागमिष्यत्यदम्भाः ! ।
विगलितपयसां वो वारयेत्कोऽद्य धारां ?
स्वयमपनयतेमां वत्सका ! दुर्निवाराम् ॥ १३ ॥

इयमपि मम माता स्वर्गतो गां प्रयाता
पुनरपि दिवि देवीवाऽविरास्ते विभाता ।
इदमिह शुभदं वः श्रूयतामेकतत्त्वं
सजलधिभवराज्यं मह्यमाम्नाय्य दत्तम् † ॥१४॥

---

* मनुष्याणाम् आयुरिव सुखं दुःखञ्च न चिरयतीति भावः ।

† "Through the lamented death of my beloved and dearly mourned mother, I have inherited the throne which has descended to me through a long and ancient lineage."—*Extract from the Letter addressed by the King-Emperor to the Princes and the People of India.*

विरचितवरयत्नात्तस्ततो गां विदित्वा
बुधरचितसभायां तत्र तत्रेति मत्वा ।
जनगणहितबन्धे सर्व्वतः सर्व्वचेष्टां*
शृणुत समयमुच्चैर्धारयामो यथेष्टाम् ॥ १५ ॥
अधिगतपयसां† प्राक् वत्स-नृणां सरागं
परधनमिव मत्वा स्थापयित्वाग्रभागम् ।
इह हि भवनगर्य्यां भूमिदेव्याः सुगव्या
वयमिति शृणुतोच्चैः शेषभाजः स्म भव्याः‡॥१६॥
शृणुत सकललोकाः ! सत्यमाज्ञापयामः
न वयमनृतभाजोऽसत्पथे वा व्रजामः ।
इह हि धरणिराज्ये योन्नतिर्नः प्रजाद्रे-
र्विरचितधृतिरास्तां सा पुरेवाविषादे ॥ १७ ॥
सकरुणविनयोक्ती, राजकीया च भक्तिः
सहृदयनृपतीनां प्रीतिदा नोऽनुरक्तिः§ ।
वितथवचनगद्यं साधवो नारभन्ते
नयनसलिलमेवं मादृशा नो सहन्ते ॥ १८ ॥
(युग्मकम् ।)

* Vide the extract quoted under Śloka 41 below.

† पयः—दुग्धम् ।　‡ "भव्यगेये" त्यादिना कर्त्तरि निपातः ।　§ चास्तामिति शेषः ।

व्यसनमपि नृपाणां घोरमटाट्याख्यं
विषमयमिव तच्चेत्स्याद्गुणा बहुसत्यम् ।
मदयति जनजातं, योऽजयेद्दात्मगर्व्वै
द्रुतपदमथ तस्माद्दूरतः सन्तु सर्व्वे * ॥ १९ ॥

श्रुतमथ सततं वः प्रत्यहं धर्म्म-नाम ?
प्रकृतमिह नृणान्तद्भूषणस्यैकदाम ।
फलितसुफलहृद्यस्यास्य सम्प्राप्य गन्धं
प्रलयशतसहस्रैराविघोत्कस्तमोऽन्धम् ? ॥ २० ॥

गुरुलघुफलपुष्पेत्यादितर्कादिधो यः
स्फुरति सुखसहस्रैर्यस्य काम्योऽपि भोगः ।
भजत न भजतेमं † नैव किञ्चिद्वदामः,
सुखमथ न सुखं वः केवलं लोकयामः ॥ २१ ॥
(युग्मकम् ।)

प्रकृतिनिकरबाध्यो यो भवेत् सोऽत्र राजा
ध्रुवमिति स च सम्राट् स्तूयते भक्तिभाजा ।
जगति विदितमेतत् वक्तृताभिर्यदाभि-
र्नरपतिकुललक्ष्मीमातृवक्त्रोत्थिताभिः ॥ २२ ॥

---

* आत्मीय-स्वपतीर्मुद्दिश्य एतदुक्तम् ।  † इमं—धर्म्ममिति यावत् ।

कर* इह चिरकालं विद्यते योऽनवीनः
स्थिरयतु स तु तावत् स्वस्वदीर्घत्वहीनः।
अयमपि गुरुकार्यस्थापितोऽभूत्महिष्या,
सकृदपि गुरुवाक्यं लङ्घयन्ते न शिष्याः॥ २३॥

स्वदियमिह गवीव द्योतते विश्वधात्री
सकलजनपदानां मातृवद्दुग्धदात्री।
जगति बहुलमस्यास्तत्पयोऽस्तु प्रकाण्डे,
सुनृप इह समस्तं को नयेदात्मभाण्डे?॥ २४॥

उचितमिह पयोऽस्या गन्तुमन्यत्र कुण्डे
सकलमपि तदेतत् स्थापयेत्कः स्वतुण्डे?।
निखिलमनुजपेयं तत्पयः सत्सुधावत्
कुनरपतिभिरुच्चैरेकलैः पीयते तत्†॥ २५॥

कर-हरण-विशालं स्वत्वमेकं नृपाणां
तदपि विविधरूपं भौगिकं स्वात्मजानाम्।
फलमथ जलमत्यन्नं विक्रीयते तैः
नृपतिसुखमथः स्यात्, तत् पुनर्वार्य्यते कैः?॥२६॥

* These stanzas (23—27) refer to the system of Land-assessment of India and the taxes paid by the people.

† "Endeavours are made to *return* to the tax-payer in the shape of roads and public works of general usefulness a *large portion of the taxes paid.*"

स इह सरलभावः षष्ठभागः करोऽपि
स्फुट इति गुरुबाधा विद्यतेऽताप-रोपी* ।
नरपतिरयमेकः किञ्च कुर्य्यात् तदानीं,
धनमपि जनराजिः सैनिकं न प्रजा किम् ? ॥२७॥

मृग-मृगपतिभेदो विद्यते सत्यमेतत्
मृगपतिरिति मानैर्धार्य्यते केवलन्तत् ।
सकलमृगमनीषा-पञ्जराभ्यन्तरस्थः
प्रभवति स च सिंहः किं नु वा नम्रमस्तः ? ॥२८॥

कान्तेनैव च रक्षणादथ वणिग्व्यापारभारप्रभोः†
सन्तोषापचयाच्च वङ्गनगरे कामं प्रजासन्ततेः ।
राज्यं मातुरिदञ्च भारतगतं यत्तत्प्रजानुग्रहैः‡-
रित्येव श्रुतमस्ति पुस्तकलिपे राज्ञ्या ब्रुवन्त्याश्च नः ॥२९॥

---

* अताप-रोपीति—इनिर्मत्वर्थीयः । (Vide "प्रभासि" in Canto VI., 53. अत्रापि इनिर्मत्वर्थीयः ।)

† इदानीं वङ्गादिराज्यलाभरूपिणीः पुरातनीः कथाः आख्याते (१६—१८) । कान्तः—कश्चित्तैलतण्डुलादिव्यवसायी । अयमेवं राजानुग्रहात् उत्तरकाले नूतनैक-राजवंशस्य मूलपुरुषो बभूवेति विख्यातोऽयं कथाप्रपञ्चः । Kanta was the ancestor of the line of the present Raja of Moorshidabad, who helped the East India Company much.

‡ "The harassed people welcomed a power which could restore *rest* to the land and give *security* to its ryots."

वाणिज्यार्थं कतिपयजना वाङ्गलार्दिं वियानां
बम्बाराज्यं प्रथममगमन् भारते पण्यभाण्डैः।
प्राक्पुंसां वः प्रणयरसिका,स्तद्गुणै राज्यणास्ते ;
साहेबानां क्वचिदपि न तद्विस्मरिष्यन्ति वंश्याः* ॥३०॥

उन्माहाक्या जगति विदिता सा कृतघ्ना च जातिः†-
र्धीनेच्छातो भ्रमति भवतां गोचरश्चास्तु यष्टिः।
तां पश्यध्वं नयनसुदृशा, सत्यमेकं शृणुध्वं
तैस्तै राजा दृणयति स वः शत्रुसङ्घं समेतः ॥ ३१ ॥

क्लिष्टाः पूर्व्वं युवतिकलन-
प्रक्रियाद्यैरनेकै-
र्विराजानां शरणमुदगुः
सद्वणिग्भाण्डभाजाम्।
दुर्बुद्धेर्याः कुनयपतिता-
स्ताः प्रजा वङ्गभाजो
नान्योपाया व्यसनपतितात्
पीड्यमानाः सिराजात्‡ ॥ ३२ ॥

* बम्बाराज्यम्—Bombay. "With regard to the acquisitions of territory, the *first* possession of the English was the island of Bombay."—*Cowell's Constitution of the Courts.* तद्गुणैः—प्रजानामिवानुग्रहादिभ्यर्थः। पुंसाम्—भवतामिव पूर्व्वपुरुषाणामित्यर्थः।

† सा जातिः—इंराजजातिरिति यावत्।

‡ Siraj-ood-doula, Nabab of Bengal, Behar and Orissa.

वङ्गास्तेषां कतिपयजनानाह्वयित्वा पदातीन्
युद्धोद्योगे कृतवति पलाश्याख्यया ह्यत्रवाग्याम् ।
प्राण-त्राणे रचितमतयः केऽपि तेषां जनानां
प्रोचुः कृत्वाञ्जलिमिदमिदं ते कुराजं सिराजम्*॥३३॥

"श्यालो मीरस्तव समदनो विग्रहे वर्त्तमाने
पर्य्याक्रान्तः समरभुवि तैर्भग्नपादोऽस्तमाप्तः ।
इंराजानां प्रणयरसिकः सैन्यराट् जाफरोऽयं,
तादृग्भावः स कथमधुना? शङ्किता राजधानी!†॥३४॥

"न स्थातव्यं क्षणमपि ततः श्रीमता‡ राजधान्यां
राज्यं भोगा मनुज-नृपता जीवितस्यैव सर्व्वम् ।
जेनाबाले§र्लवणसलिलैर्जीवितं नो धनं नो
दुर्व्वाग्जाता प्रणतकृपया मार्ज्जनीया त्रुटिर्नः ॥ ३५ ॥

"आसन्नं यद्ध्वनति शृणु तद्घोरमिंराजसैन्यं
गात्रोत्थानं त्वरितमधुना भूभुजोऽग्रे विधेयम् ।
विश्वासार्हैः सचिवनिकरैर्बेगमाश्च क्षेमचिन्त्वै-
रेषा नीतिर्विपदि विहिता, मा विलम्बो विधेयः॥३६॥

---

* तेषाम्—इंराजानां क्लाइभ-प्रमुखाणामित्यर्थः । पलाशीति—Battle of Plassey. This battle was fought and won on June 23, 1757. प्राणत्राणे—सिराजस्य प्राणरक्षार्थमित्यर्थः । केऽपि तेषां जनानाम्—केऽपि वङ्गीयाः प्रजाइत्यर्थः ।

† समदनो मीरः—मीरमदननामा कश्चित् सिराजस्य सेनानायकः । जाफरः—Mir-Jafar. अयमपि सिराजस्यापरः सेनानायकः । तैः पर्य्याक्रान्तः—इंराजैः पर्य्याक्रान्त इत्यर्थः ।

‡ श्रीमता—भवता सिराजेनेत्यर्थः ।

§ जेनाबालेरिति नबाबविशेषणम् ।

¶ बेगमाः—सिराजपत्न्यः ।

"आनीता नौर्विपदि नृपतेः श्रेयसे दुःखितैस्तै-
राजस्रेशो भवसि बलवान् निष्ठुरस्यापि दस्योः ।
तामारुह्य द्रुतगति पुनर्गोपयस्यात्मयन्त्रं *
पश्चासन्नो वमति गरलं द्रोहिणां † यत्नसर्पः"॥३७॥

इत्यन्तावद्रचितविधिना ताड़िते दुर्नबाबे
साहेबानां तदवधि वरप्रीतिभाजो भवन्तः ।
इंराजास्तत्स्मरणविमुखा, ये वदन्तीत्थमित्थं
तेषां वाचो भुवनभवने दूरतो वर्ज्जनीयाः ॥ ३८ ॥

एकेऽसिं प्रवदन्ति शाणिततरं
भूभारताप्तौ जनाः
केचित् शापमुदाहरन्ति मनुजाः
स्वीयां सिराज प्रति ।
'इंराजस्य करे तु भारतमभूत्
यत्तत्प्रजानुग्रहात्'
इत्यासीदृतमेव ‡ नः श्रुतिगतं
मातुः प्रसन्नान्मुखात् ॥ ३९ ॥

* आत्मयन्त्रम्—देहमित्यर्थः । † द्रोहिणाम्—भवद्द्वेषिणाम् ।

‡ ऋतम्—सत्यमित्यर्थः । इंराजस्य करे तु इत्यादि—"The harassed *people welcomed* a power which could restore *rest* to the land and give *security* to its ryots."

अस्मिन् ये मम मन्त्रिणः ससुहृद-
स्तत्त्वावधाने रताः
व्याख्यान्त्येव च प्रजा-पोषण-विधौ
सर्व्वं च तेऽहर्निशम् ।
मा चिन्तां प्रथयन्तु मानसपुरे,
तिष्ठन्तु सुखाशया,
राजेवेश्वरमूर्त्तिरस्ति स च किं
नित्यं प्रसन्नो न वः ?* ॥ ४० ॥

सर्व्वं पूर्व्ववदस्तु मातरि यथा राज्यं मयेदं तथा
पूर्व्वोक्तैर्नियमैः सुशासनविधिर्मा भूच्च तस्यान्यथा† ।
मुद्रा या च मम प्रसूतिविलसद्बालेन्दुविम्बोज्ज्वला
सा भूयादिह केवलं नवनृपश्रीसम्मुखाङ्कस्थला‡ ॥४१॥
(युग्मकम् ।)

* चिरस्थायिनी नञ् ।

† "I shall endeavour, following the great example of the first Queen-Empress, to work for the general well-being of my Indian subjects of all ranks and to merit, as she did, their unfailing loyalty and affection."—*Extract from the letter addressed by the King-Emperor to the Princes and People of India on* 4. 2. 1901.

‡ The *first* coin was issued from the mint on New Year's Day, 1902. मुद्रा = Coin.

तस्मात्सुपुत्रा* वयमद्य भूपा-
स्तृषातुराणां जलदानकूपाः ।
मा वो भयं, स्वोद्यतभक्तसख्या
आर्य्या ! व्रजामः प्रतिपुष्टरक्षाः ॥ ४२ ॥

कर्त्तव्यतायामपि जागरूका
भवन्तु सर्व्वे, न भवन्तु मूकाः ।
भूभारतं प्रस्तुतदृश्यकाव्यं
न किं भवद्भिः परिरक्षितव्यम् ? ॥ ४३ ॥

सुसंस्कृतानन्दघनैर्लसच्चित् †
स्थितिः शुभा भारतिनां नु कच्चित् ।
सुसंस्कृता गौश्च सुसंस्कृता धी-
र्भजत्यथैनां न तु मानसाधिः ? ॥ ४४ ॥

सदा नृपाध्यक्षसुदृष्टिसम्बलं
पुरेव किं भारतदृष्टजङ्गलम् ? ।
विपत्तिदुर्वायुबलाद्बहिष्कृतं
तथैव किं पुष्पितमस्ति विस्तृतम् ? ॥ ४५ ॥

---

* तथा दयावत्या मातुर्विजयिन्याः पुत्रा इति व्याख्येयम् ।

† अधुना भारतस्य क्षेमं पृच्छति (४४—४७) ।

उदीर्य्य यन्नाम तथैकवासरं
न नीतमासीच्च पुरा कृतादरम् * ।
महामहिष्याऽम्बिकया च मादृशां ;
पुरेव संस्था किमु तस्य † तत्त्विषाम् ? ‡ ॥४६॥
चकार राज्ञी धनतश्च यत् स्थिरं
पदे पदे निर्म्मितपाठमन्दिरम् ।
परिष्कृतन्तत् खलु वर्ष-भारतं
तथैव किञ्चास्ति महोत्सवे रतम् ? ॥ ४७ ॥

(कलापकम् ।)

सर्व्वाग्रे प्रवदन्तु संस्कृतगिरो
भूभारते मङ्गलं §
या तत्रैव कृतास्पदा सगगनं
व्याप्नोति भूमण्डलम् ।
या ज्येष्ठा भगिनीव सर्व्ववचसां
छन्दःशतैर्गुम्फिता
सा पूर्व्वाकृतिरस्ति किन्न च पुनः ?
तद्ब्रूत वत्सा ! द्रुतम् ॥ ४८ ॥

* "In all matters connected with India, the Queen-Empress displayed an unvarying deep personal interest."—*Extract from the letter referred to above.*   † तस्य—भारतस्येति यावत् ।

‡ तत्—इति प्रविश्यार्थे, अनुभूतार्थे वा (The King visited India in the winter of 1875).   § अधुना संस्कृतभाषायाः चैवं पृच्छति (४८—४९) ।

या कुत्राप्यतिकोमलातिमधुरा या चाश्रुतस्यन्दिनी
दिव्यालङ्कृतिरङ्गनेव च नवा प्रौढा च या कुत्रचित् ।
नानारूपकलेव भारतकवेरेषाम्यपद्मासना
यद्वार्त्ता रसदा प्रिया च जगतां तां वक्तुमग्रेऽर्हथ ॥४९॥
(युग्मकम् ।)

श्रीमद्भिश्चिरजीवितैर्नरपतेस्तैः * षष्ठपोषीद्यतै-
रात्मानं निरुपद्रवं मघवता मन्ये च तुल्यीकृतम् ।
युष्माभिः कृतविक्रमैः खगतिदृग्यन्त्रादिभिः † शिक्षितै-
र्भूलोकेऽत्र निवासिभिर्भवतु च स्वर्गौकसां सङ्गमः ॥५०॥

लोकानां गणनासु ‡ दिङ्मितशके काञ्चिच्च दृष्ट्वोन्नतिं
ये तामात्मपरायणा भुवि जना नेच्छन्ति नेच्छन्तु ते ।
राज्ञीगर्भगुहाखनेः सुमणयो जातास्तु ये मादृशा-
स्तेषां तन्मतमेव नैतदिति, तस्तूच्चैरिदं घुष्यते ॥ ५१ ॥

---

* नरपतेर्ममेति शेषः । अद्युना प्रजानां चिरं जीवति (५०—५१) ।

† दृग्यन्त्रं—दूरवीक्षणयन्त्रं (Telescope) । खगतियन्त्रं—The baloons.

‡ The Census operations. It was ascertained in the last Census (March 1901), that the population of India has risen from 220 to 230 millions and the income of Government from 73½ crores to 108 crores of rupees.

अद्यापि प्रसमीच्यते न च मया
हित्वा च मन्मातरं
पुत्त्रेभ्योऽपि दयालुरुन्नतमनाः
क्वापि प्रजादीन् प्रति ।
या छायामभिवीक्ष्य भूपभयदां
प्रागेलिजावेथ्*तनोः
पुत्त्रादेस्तु कथैव नास्ति भुवि या
व्यस्ता प्रजाश्रेयसे ॥ ५२ ॥

सर्व्वस्वं नृपतेर्जयध्वजपटी
भूशिल्पिना निर्म्मिता
भारोद्धारधुरन्धरेष्विव गजा-
वेगप्रजाढ्या प्रजा ।
यद्धीना न विभाति भून च जग-
द्राज्यं न राज्येश्वरः
सा† जीयादभिगीतराजभजना
राजश्रियां व्यञ्जना" ॥ ५३ ॥

* Queen Elizabeth. इयमेव किंवदन्ती विजयिन्याश्शिरोधानकाले लण्डने भारते च प्रादुरासीत् (Vide Canto VII., 44 and 45) ।

† सा—प्रजा इति यावत् । भूशिल्पिना—विधात्रा इत्यर्थः । गजावेगः—गज-पराक्रमः ।

अस्तवचनमेतत् शान्तिदं घोषयित्वा
विरमति सति तस्मिन् शोकमाशोकयित्वा ।
त्वरितगतितडित्तत्तद्गिरामर्थतत्त्वं
ध्वनितमिदमकार्षीत् भारते सम्प्रदत्तम् ॥ ५४ ॥

विपदि पुनरसह्ये शोककाले कराले
नृपपुरि परिषत्स्थे सम्मुखीने नृपाले ।
जनगणहितसिद्धौ भूपतीनाञ्च मध्यात्*
क इह स जगतीदृक् शान्तिवाक्यं विदध्यात् ?॥५५॥

भूभारते ये गुरवः सशिष्या-
स्ते सन्ननन्दुश्च तथैव निःस्वाः ।
उद्घोषिताभूत्नवपार्थिवाज्ञा
पेठुश्च तां राजपुरक्रियाज्ञाः ॥ ५६ ॥

मुखे मुखे गड्गडितीरितं यत्
करे करेऽपि ध्वनितं तदेतत् ।
वाद्यो जनं गड्गडिति ब्रुवाणं
चक्रुर्जना धन्यवचःप्रदानम् ॥ ५७ ॥

* मध्यात्—इति ल्यब्लोपे पञ्चमी अधिकरणे । मध्ये उपविश्य इत्यर्थः ।

अश्रुप्रजैरुच्छलिताश्च वङ्गा
मुदा ननन्दुः सविलोलगङ्गाः ।
सम्पूर्णखञ्जश्च बभूव शोकः
शनैस्ततः स्वस्तिगतश्च लोकः ॥ ५८ ॥

दीर्घातिदीर्घसमयं शमयं* विधाय
शौर्यश्रिया जनशुचां परिपन्थिकायः ।
सञ्जीवतादयमतीव † हितानुबन्धे,
सोऽग्रेचरोऽस्तु च पुनर्नवसत्यसन्धे ॥ ५९ ॥

कृतं कृते ह्यस्य‡ सगीत-गद्यं
कवेरिदं काव्यमुदात्तपद्यम् ।
जगत्समक्षे विनिवेदितं यत्
तदद्य गृह्णन्तु महोदयाः ! सत् ॥ ६० ॥

* शं—मङ्गलमित्यर्थः। शमयं—मङ्गलमयमिति भावः।

† अयं—नरपालः इति यावत्। कविरेतेन श्रीश्रीमन्महानरपतये शुभाशीर्वादं करोतीति द्रष्टव्यम्।

‡ अस्य—श्रीमन्नृपराजस्येत्यर्थः। इदं काव्यम् उपायनच्छलेन श्रीश्रीमन्नृपराजकरे भिभिः समर्पयति कविः।

इदन्तु कर्णाभरणञ्च कर्णौ
भृङ्गीभवद्भातु सुवर्णवर्णौ ।
राज्ञः स्मृतेश्चिह्नमिदं विभूषा
चिरायमाणो नभसीव पूषा ॥ ६१ ॥

इदं धराकम्पनझम्पवर्ज्जितं
चिरस्थिरत्वेषु च तावदूर्ज्जितम् ।
अगोचरे पत्रतले च यत्स्थितं
प्रगातुमर्हत्यथ कण्ठलम्बितम् ॥ ६२ ॥

(विशेषकम् ।)

इति श्रीश्रीश्वरीये विजयिनीकाव्ये
श्रीमन्नवराजीयघोषणाकथनो
नाम नवमः सर्गः ।

---

* "कुगतिप्रादयः," "ऊर्य्यादिच्विडाचश्चेति" च—समासः ।





# दशमः सर्गः।

जयत्यसौ लण्डन*नामदेशः
श्रिया गरिष्ठः सकलाद्विशेषः।
तटे समुद्रस्य स इन्द्ररूपः
स्वर्गस्य कल्पद्रुमवत् सभूपः† ॥ १ ॥
यः सार्व्वभौमो नगरव्रजानां
निवासभूमिश्च तथा प्रजानाम्।
फलानि हीराणि, वसन्ति वीरा—
यत्रापि साहेबगणाः सुवीराः ॥ २ ॥
आश्चर्य्यभूतः‡ स च इन्द्रराज-
च्छायाप्रकाशीकृतदिक्समाजः।
इङ्ग्ले च यस्य प्रथित-स्वभिख्या
पुरोदिता राजकलाऽबलाख्या § ॥ ३ ॥

---

* London.

† भूपेन सह वर्त्तमानः—सभूपः।

‡ आश्चर्य्यभूतः—"श्रेण्यादिराकृतिगण इति शाकटायन इति" मल्लिनाथोक्त्या, "श्रेण्यादयः कृतादिभि"रित्यनेन समासः। अथवा आश्चर्य्यं भूत इति वाक्ये सुप्सुपेति समासः। अथवा इवोपमानार्थे भूतशब्द इति नित्यसमासः।

§ विजयिनीति भावः।

रत्नस्य भारैरिव पीड्यमानो
भारं लघूकर्त्तुमिवेहमानः।
अत्रैव किं न्यस्य स रत्नजालं
सिन्धुर्नदीनां पतिः समस्तकालम् ? ॥ ४ ॥

अधीनताशृङ्खलकर्षणेन
तिरोहितं स्विप्रमकिञ्चनेन।
सुवर्णमुद्रापरिचालकेन
प्रक्रीडितं तत्र मुदा जनेन* ॥ ५ ॥

स्त्रीणां सुबाहू ससुवर्णकम्बू
प्रक्षालने चारुविभास्वदम्बू।
प्रियस्य कण्ठे घटितौ च पाशौ
शिल्पादिदक्षौ सकणालभासौ ॥ ६ ॥

बन्धुत्वमप्यादररूपसम्पदा
विभान्ति नार्य्योऽत्र निसर्गधर्मदाः।
प्रायेण च प्रेमकलालसत्क्रिया-
न धर्त्तुमर्हन्ति तनुं धवं विना ॥ ७ ॥

---

*चतुर्भिः श्लोकैः खण्डनीय-स्त्री-पुरुषाणाम् ऐश्वर्य्यस्वाधीनत्वादिकम् आदौ वर्णयति (५—८)।

अधीनतायाश्च तिरोहितं भयं
जयेन पूर्णं भवनादि सञ्चयम् ।
ब्रुवन्ति नैवाच तथेतरे जनाः
करं प्रदेहीति गिरा विलक्षणाः* ॥ ८ ॥

तथापदां द्वन्द्वमुदीर्णसङ्कटं†
स्पृशत्यमुष्मिन्न घटं मठं पटम् ।
निरस्यतेऽसंस्कृतद्वारजङ्गलं
ततः क्षणादस्तमुपैत्यमङ्गलम् ॥ ९ ॥

विशेषसंस्कारघटासुसंस्कृते
तथा शरीरेऽपि गृहे सितासिते ।
सदा चिकित्सालयकार्य्यकारकैः‡
पलाय्यते व्याधिरितोऽर्त्तिहारकैः ॥ १० ॥

* "Even from the time of Henry I., the citizens (of the City of London) enjoyed exemptions from the Danegeld and from similar *obligations.*"—*Encyclopedia Britannica.*

† एतत् लण्डनस्य म्युनिसिपाल-(Municipality)संस्कारं समसिद्धत्व कथितम् । "London is the wealthiest municipality upon the face of Globe."—***Review of Reviews, February***, 1902.

‡ "Every year over 1,600,000 persons receive treatment, either as in or out patients at the London ***hospitals* and *dispensaries*.** There are 85 hospitals and 50 dispensaries scattered fairly evenly over the city."—***Review of Reviews, February***, 1902.

प्रकम्पयत्यत्र भुवञ्च यो नरः
स लण्डने भाति यथा पटच्चरः ।
तथैव यो निन्दति भारतं वरं
तमेव निन्दन्त्यथ लण्डना* नरम् ॥ ११ ॥
अस्मिन् गृहाणां † द्वितलादि-मञ्चः
शय्याद्युपारोहविधौ कलञ्च ‡ ।
भोज्येऽपि चर्व्व्यादि तथैव चूष्यं
घण्टाध्वनिर्ज्ञापयते मनुष्यम् ॥ १२ ॥
ध्वजैः पताकाकलसैश्च सन्मठाः
सदा विराजन्त्यथ यत्र कर्म्मठाः ।
निशामयन्तः एषु वक्तृतावचः
स्थिता विनीता इव तेषु के न च ? ॥ १३ ॥
तत्तद्गृहाणां द्वितलप्रकोष्ठं
वराङ्गनानां प्रतिबिम्बितोष्ठम् ।
दृष्ट्वैव साक्षादतिविस्मिताना §-
मापद्यते धीश्च जड़ोपमाना ॥ १४ ॥

* लण्डना:—लण्डनदेशीया जना इत्यर्थः ।

† अधुना गृह-वर्णना आरभ्यते (१२—१८) । These ślokas refer to the various buildings, halls, towers and the churches like St. Paul's and Westminister Abbey.

‡ कलं—यन्त्रादि इत्यर्थः । अत्र: कलश्चेत्युभयत्र अस्तीति शेषः । "अस्ति भवतिपरः प्रथमपुरुषेऽप्रयुज्यमानोऽप्यस्तीति भाष्यकारः ।" एवं सर्व्वत्र द्रष्टव्यम् ।

§ "It breaks on the *visitor* with all the effect of a *sudden surprise*."—*Encyclopedia Britannica*.

न लङ्घनं पाद-सुख-प्रदाया-
विभाति सोपानपरम्परायाः ।
विधिः कलेनैव * लसच्छलेन
प्रदृश्यते तत्र सदाचलेन ॥ १५ ॥

क्षणादसौ नूतनतां प्रयाति
प्राग्वत्प्रकोष्ठो न च संविभाति ।
प्रकृष्ट-शिल्पस्य लसत्प्रमाण,-
माकाश-दोलेव विराजमानः ॥ १६ ॥

तेष्वेव गेहेषु महामहोत्सवः
सतां प्रसङ्गस्य तथा समुद्भवः ।
मुदा विराजन्ति च तेषु दीक्षिताः
परस्परं प्रेमणि भान्ति शिक्षिताः ॥ १७ ॥

क्वचित्तदेकेश्वरवादिनां मतं
निरीश्वरं क्वापि च विस्तृतिं गतम् ।
क्वचिच्च खृष्टानुगतेन वर्त्मना
नृणां वरीवर्त्ति मुदा प्रवर्त्तना ॥ १८ ॥

---

* कलेन — तद्द्वारोपस्थापकयन्त्रेण इत्यर्थः ।

तथेश्वरध्यानचिकीर्षयासने
विराजिते तत्र दिने नभोमणेः* ।
प्रसादयन्त्येव मनांसि पाठकाः
स्त्रियाश्च पुंसामपि सत्य-नाटकाः ॥ १९ ॥

इदन्त्विदं रत्नगृहं सुभास्वरं
ततोऽपरं दर्पण-मन्दिरं† वरम् ।
जगद्वरा खण्डन-शिल्प-पण्डिता
द्युतीस्तृणेनापि सृजन्त्यखण्डिताः ॥ २० ॥

काचोऽपि‡ भाभीरजतावतंसः
सुशिल्पचातुर्य्यमुपेयिवान् सः ।
यो विद्विषां भक्तितहृत्प्रसादः
परश्रिया क्लिष्टधियां विषादः ॥ २१ ॥

इदं§ गरीयो द्वितलादिविस्तृतं
सुतुङ्गशृङ्गं रजताद्रिवत् स्थितम् ।
तथाविधं कस्य न दृश्यते वपु-
स्तदद्भुतं, नो रजतं न च त्रपुः ॥ २२ ॥

---

* नभोमणेर्दिने—रविवासरे इत्यर्थः ।

† पञ्चभिर्दर्पणनिर्मितमन्दिरं वर्णयति (२०—२४) । This refers to the Crystal Palace at Sydenham opened during this reign. It was *originally* erected in Hyde Park from the designs of Joseph Paxton.

‡ काचोऽपीति यत्र मन्दिरस्येति शेषः ।

§ इदं—तत् मन्दिरम् इति यावत् ।

आवस्य यत् तन्नगरं सुभास्वरं
विलोक्यते साहतिभावभत्वरम् ।
तरङ्गिणी तुङ्गतरापि सा* तथा
ससंक्रमा ग्रीष्मकृतौ यथा निशा ॥ २३ ॥

जना न पश्यन्ति तमद्य दर्पणं
पदान्तरे† तेन कृत प्रसर्पणम् ।
यदीयबिम्बे पतिता हठान्नरा-
भवन्ति वक्रैरिव चारुवानराः ॥ २४ ॥

अस्मिन् जयिन्याः पुनरेकमन्दिरं‡
वरस्य यत्नेन कृतं भुवि स्थिरम् ।
इङ्गानडस्थैकतमास्ति सुन्दरी
विभाति या शिल्पिनृणां यशस्करी ॥ २५ ॥

प्रजानुरागाज्जनताभिरेकं
यन्मन्दिरं दत्तधनप्रवेकम् ।
अकारि सद्मेमकदम्बवारि-
शोभं चतुर्द्वारि कपाटधारि ॥ २६ ॥

* सा तरङ्गिणी—समसैनि प्रसिद्धा नदी च विलोक्यते इति शेषः ।

† पदान्तरे—स्थानान्तरे इत्यर्थः ।

‡ विजयिन्याः पतिमन्दिरवर्णनं क्रियते पञ्चभिः (२५—२९) । "The first stone of the Albert Memorial Hall at Keningston adjoining the gardens of the Horticultural Society was laid by the Queen and the building was finished in 1871."—*Holmes' Queen Victoria.*

निषेदुषो कामरवीरपृष्ठे
प्राग्देशिवेशाभरणेन हृष्टे ।
एकैव तद्द्वारि गतास्ति बाला
लावण्यमूर्त्तेरिव चारुमाला ॥ २७ ॥

द्वारद्वयेऽन्यत्र तथैव हट्टे
गजोष्ट्रयोः सज्जितचारुपृष्ठे ।
इयं युवत्याः सह देशिदासैः
स्मेराननं भाति विनीतहासैः ॥ २८ ॥

वृषोपरि द्वारगतैवमेका
स्फुरत्सुलावण्यकृताभिषेका ।
रूष*प्रदेशप्रभवास्ति कान्ता
स्वदेशिभूषां दधती च शान्ता ॥ २९ ॥

शून्यः प्रदेशः खलु यः प्रभाते
स किञ्चिदर्के गगनं प्रयाते ।
नृणामुपालक्ष्यत एव हट्टैः †
स्फुटप्रसूनैः कृतचारुखट्वैः ॥ ३० ॥

---

* Russia.

† अयं हट्टादि-(Market place)वर्णनात्मकः श्लोकः । "The existing Markets are :—Smithfield (poultry and game), Billinsgate (fish), Covent garden (fruits, flowers and vegetables) &c. &c."—*Encyclopedia Britannica.*

यो नाटकादेरभिनेतृवर्गै *-
रुपासितः प्रत्यहमात्तसर्गैः ।
श्रव्येण दृश्येन च यो विशेषः
स्वर्गोपमः श्रेष्ठतमः प्रदेशः ॥ ३१ ॥

सुगीतविद्याम्बुधिपारदर्शिभिः
पदे पदे कर्णरसप्रवर्षिभिः ।
निषेव्यते यो गुणिनां प्रहर्षणै-
र्धनव्ययैश्चापि धनोन्नतैर्जनैः ॥ ३२ ॥

(युग्मकम् ।)

ह्रदान्तले याति तथैव यानकं
तड़िद्बलेनैव मह्नीयमानकम् ।
निरन्तरं भूपरि-यान-वर्त्मना
विमिश्रभावेन च यत्प्रवर्त्तना † ॥ ३३ ॥

---

* द्वाभ्यां नाटक-भवनं वर्णयति (३१ – ३२)। "London at present possesses 30 Theatres. Melo-drama and domestic drama win large support. The plays of the older dramatists are revived occasionally at Drury Lane and the Princess's."—*Encyclopedia Britannica.*

† विविधानां यानानां वर्णना क्रियते। Hackney coaches, Omnibuses, Cabs and Railway carriages are described by this śloka. "The Metropolitan Railway lines run partly underground."

यानकम्—इति स्वार्थे कन्प्रत्ययः। मह्नीयमानकम्—इति स्वार्थे कन्प्रत्ययः।

"During 1902, there were 351,000,000 Railway passengers, 356,245,560 Omnibus-passengers and 535,000,000 Cab-passengers."—*Donald's London Manual.* "There are 3685 Omnibuses, 7531 Hansoms, 3721 Cabs and 215 miles of Railway within the County of London."—*Ibid.*

विलासिनी पण्यवनं श्रिया घनं
घनैर्जनैः लक्षितगोचकाननम् ।
प्रविश्य चाम्लानमुखी श्रमातुरा
पथिभ्रमात् कापि विभाति मेदुरा * ॥ ३४ ॥
शिक्षागृहाः† यत्र विभान्ति नाना
लसद्गुणान्योन्नतिद्वन्द्वदानाः ।
प्रत्यब्दमेभ्यो यशसां सपर्या
विद्वत्त्वमभ्येत्य विभान्ति वर्याः ॥ ३५ ॥
इहैकतः पुस्तकरत्नकोषः ‡
प्रदृश्यते यत्र सतांश्च तोषः ।
श्रुतौ भ्रमन्नेव न यो विषण्णः
सुखेन पश्चादिह सन्निषण्णः ॥ ३६ ॥

---

* This refers to the beautiful Parks of London, such as Hyde Park &c. The following may be read in connection with what is said in the śloka—"Battersea Park contains a sub-tropical garden which, during August and September, possesses much of the *witchery* of an ideal Fairy-land."—*Encyclopedia Britannica.*

† This refers to the various schools and colleges of London. "There are almost 900,000 children of school-age within the Metropolitan area, the average daily attendance is over 600,000."—*Review of Reviews, February*, 1902.

‡ अधुना नवभिः पुस्तकागारं (British Museum) वर्णितम् (३६—४४)। "British Museum ranks in importance before all the great Libraries of the world, with the single exception of the

सरस्वतीं कालभुजङ्गदष्टां
पञ्चास्यमय्यासु गतां विनष्टाम् ।
आश्वास्य तामत्र तु यः क्रमेण
संस्थापयन् भाति मुदा श्रमेण ॥ ३७ ॥
सा पुस्तकानां वसतिः सुवर्णा
यदास्ययोर्जीवमनुष्यकर्णा ।
विजृम्भते तावदतीतजीव-
खुष्टादिहस्ताक्षरधारिणीव ॥ ३८ ॥
सरस्वती सुप्तगृहेऽत्र सुप्ता
गुप्तापि पाठैर्न च वास्ति गुप्ता ।
पलद्वयार्द्रं समयं प्रपद्य
द्रष्टुर्हगग्रं प्रतिभाति सद्यः ॥ ३९ ॥

Library at Paris. Its departments are :—Printed books, Manuscripts, Oriental MSS., Zoology, Oriental antiquities, Greek and Roman antiquities and engravings, coins and medals, Prints and Drawings and Ethnography." "The Library consists of about 1,550,000 printed volumes and 50,000 manuscripts. The Hebrew books number over 12000, the Chinese nearly 27000, and books in other oriental languages about 13000 volumes. Musical works comprise 11000 volumes and the Maps are 116,000 in number."—*Encyclopedia Britannica.*

तद्वेश्म तत् पुस्तकरत्नपूर्णं
धनन्तथा कोट्यधिकं सुवर्णम् ।
दधच्च माणिक्यमणेः कदम्बं
रत्नवर्णैस्तैरपि भात्यदभ्रम् * ॥ ४० ॥
चतुर्थवर्षीयमिहैव राज्ञ्याः
पश्यन्ति हस्ताक्षरमप्यभिज्ञाः † ।
गीताञ्च‡ तां संस्कृतिशोभमानां
भूभारतीयां कृतयत्नदानाम् ॥ ४१ ॥
कोषः स सन्ध्याभ्रमरीचिधारी §
श्रीचाध्वना सर्व्वधराविहारी ।
जलाग्निकीटैरभितोऽस्ति हीनः
राजाज्ञया सेवकवान्नदीनः ॥ ४२ ॥
अहो नृणां तत्परता विभाति
यद्याच्यते तत्क्षणतस्तदेति¶ ।
तत् क्षिप्रकारित्वमहो स्मृतिश्च
तेषां प्रयत्नो नवसंस्कृतिश्च ॥ ४३ ॥

---

* "The Library, apart from the enormous number of volumes, contains extraordinary quantity of *rarities*."—*Encyclopedia Britannica.*

† Vide notes on stanza 6, Canto II.

‡ गीतेति—भारतीया श्रीमद्भगवद्गीतापि यत्र सुसंस्कृता रक्षितास्ति ।

§ लोहितवर्णेष्टकारचितत्वात् तद्रूपस्य ।

¶ इदं पुस्तकं द्रष्टुमिच्छामीति उदाहृते तत्क्षणमेव तदाभिरक्षकाः पुस्तकसमाकुलेऽपि तत्-

आस्तेऽधिराजस्य च तन्निधानं
इत् पुस्तकाद्यैः परिपूर्य्यमाणम् ।
जीवन्ति ते मृत्युगतास्त्वमुष्मिन्
तैरक्षरैस्तैर्वचनैश्च तस्मिन् ॥ ४४ ॥

भूभारतेऽद्यापि नृपस्य रीटा-
द्रामावतारस्य सुवर्णवीटा ।
श्रुतास्ति भक्त्यैव विनृत्य माना-
द्देका समुद्राजति दीप्यमाना * ॥ ४५ ॥

क्रीता न साद्यापि † स क्रोऽत्र हेतु-
र्गृहाधिपैस्तैरिव रत्नकेतुः ।
तद्विप्रतो यत्र निधानमेतत्
आज्ञास्ति राज्ञ्याः क्रयणेऽपि तत्तत् ॥ ४६ ॥

शतेन सोऽभून्न च संप्रदातुं
स्थितः सहस्रेण धनेन हातुम् ।
तद्रामभूत्या घटितं निधानम्
अस्पष्टरामाख्यमिदं प्रधानम् ॥ ४७ ॥

---

पुस्तककोषे । "It excels the Library at Paris in the systematic *arrangement* and accessibility of its contents."—*Enc. Brit.*

* एषा कथा मान्द्राजप्रदेशवासिनः कस्यचिन्मुखात् श्रुता । सा रामसुद्रैव वर्णिता चतुर्भिः (४५—४८) ।

† सा रामसमयप्रचलितमुद्रा कथं लण्डनीयपुस्तकागारे (British Museum) न रक्षिता इति कविः पृच्छति । As a thing of rarity and antiquity,

रामादिचक्राङ्कितसाम्यदानं
दीघयतेऽद्यापि च तन्निधानम्।
कालेन नष्टीकृतजीवमूल्यं
न किं भवेद्धन्त शवेन तुल्यम्॥ ४८॥

अस्मिन्महिष्याः पृथुराज्ययागे
प्रजाव्रजैस्स्वैव कृतानुरागे।
अध्वर्य्यवो मन्त्रिगणाश्च तस्या-
होत्री च संसत् सचिवाः सदस्याः* ॥ ४९॥

सभा† च सा न्यायपथावलम्बिनी
क्रियान्विता सङ्करसानुसङ्गिनी।
चकास्त्यल भाविफलाभिकाङ्क्षिणी
सतीव या लण्डनसिद्धयोगिनी॥ ५०॥

कोलाहलो नैव न चास्यमङ्गलं
सदःस्थितानां न मनोऽस्ति चञ्चलम्।
सदैव गम्भीरतराकृतिप्रभा
भयप्रदा वैरिनृणां महासभा॥ ५१॥

---

this coin might be preserved and kept in the British Museum.

*एतेन राज्यस्य यज्ञरूपतां व्यनक्ति। तस्याः—विक्टोरियाया इत्यर्थः। संसत्—पार्लियामेण्टनाम्नी विख्याता सभा।

†बहुभिः श्लोकैः पार्लियामेण्ट-सभां वर्णयति (५०—५५)। "The nation is actually governed by the two Houses of Parliament, whose

दूराच्च यस्या द्रितलादिशोभा *
तद्दर्शकानां नयनप्रलोभा ।
विभाति यस्यां वसतां सदा धी-
श्चिन्तानिमग्नेव पराहृताधिः ॥ ५२ ॥

सुवर्णवर्णा खलु यत्र लेखनी
करस्थपत्रेष्विव नृत्यखञ्जनी ।
बुधैः सदाचिन्तितराज्यमङ्गला
सदाजयोदन्तलसत्कुतूहला ॥ ५३ ॥

सवागवाक् चारुविचारकानना
वरासना बोधवती महाजना ।
वराम्बरा धीर-शरीर-मण्डिता
मितापि या बुद्धिबलैरिवामिता ॥ ५४ ॥

laws form the statutes of the realm. The Parliament consists of the two Houses, described as upper and lower, or that of the Lords and the Commons."—*Encyclopedia Britannica.*

* "The new palace of Westminister, built in 1840—67 for the Houses of Parliament is a vast and ornate building in the Tudor-Gothic style, covering an area of 8 acres. Towards the river, it presents a very richly adorned and effective facade. At the north-east corner is the Clock-tower and Victoria-tower surmounts the Royal entrance."—*Enc. Brit.*

विविच्यते यत्र विधिः क्वचित् स्त्रिया
पलायते वैरिगणस्तथा भिया।
विघूर्णितेऽत्रास्ति सदा महाश्रिया
यशोवतां कार्श्यवशात् पुरस्क्रिया ॥ ५५ ॥

नानाप्रभाणामुपवेशपीठं
वर्णैर्विचित्रैर्जितदिव्यकीटम्।
मध्ये विनिक्षिप्तसुवर्णवीटं
विराजते यत्र च तत्किरीटम्* ॥ ५६ ॥

न विद्यते रत्नमनेन तुल्यं
यद्गीतते भारततोऽतिमूल्यम्।
श्रिया यदुद्दीपयतेऽद्य लण्डं†
तदुज्ज्वलं हीरकचन्द्रखण्डम् ॥ ५७ ॥

---

अधुना एकादशभिः श्लोकैः कहिनुराख्य-मणिवर्णनं क्रियते (५६—६६)। वीटा—ताम्बूलवीटिकावत् तदाकृतिमुद्राविशेष इत्यर्थः। "This famous Koh-i-noor was the private property of Queen Victoria, who had it made into a Brooch, which was kept at Windsor and worn occasionally at State functions. It was exhibited at the great exhibition of 1851, and at that time was valued at £140,000. In its original uncut state it weighed 800 carats, but after being cut and recut, its weight is now only some 106 carats."—*The Statesman*. *February* 24, 1901.

लण्डं—इंलण्डदेशम् (प्रथमसर्गस्य २१ श्लोकस्य टीका द्रष्टव्या)।

माणिक्यमेकं प्रतिभातमस्मि-
न्नुदारमेतत्तदुदार-रश्मि ।
इषन्मणिः सोऽत्र च नीलकान्तः
प्रदीप्यते विस्मितलोक-शान्तः ॥ ५८ ॥

शतद्वयाद्प्यधिका च मुक्ता
गुर्व्वी च लघ्वी च तथात्र युक्ता ।
इदं पुनः पाटलवर्णहीरं
श्रियाधिकं धारयते शरीरम् ॥ ५९ ॥

नीतं पुरा यच्च नवैर्जयोत्सवै-
रनेकरत्नैश्च निधानपुङ्गवैः ।
उपास्यते तैश्च विभाविभासितं
विलोहितं यच्च सितं तथासितम् ॥ ६० ॥

यो भूषणं प्राग्रणजिन्नृपस्य *
मणिर्बभौ भूमिभुजो भुजस्य ।
स्वजातिगर्व्वं स तु खण्डखण्डं
कृत्वा पदं दीपयतेऽद्य लब्धम् † ॥ ६१ ॥

* पञ्जाबाख्यप्रदेशाधिपते रणजिन्नामक-नृपस्य ।

† लब्धं पदं—इंलण्डीयम् ।

भुजात् शिरोवासमवाप्य मानं
करोति तत्रैव स सन्निधानम् ।
नारी प्रजाश्चैव निधिश्च यस्य
करं गताः स्युर्वशगा हि तस्य ॥ ६२ ॥

रणस्य जेता स जहार यं बलात्
क वास्य मूलं कुत एष वा स्थलात् ।
स चान्यतश्चेति स चाप्यथान्यतः
क्रमाद्विधातारमुपस्थितस्ततः ॥ ६३ ॥

निपीयते यस्य मणेर्महत्कथा
स लण्डने भाति नृचक्षुषां पथा ।
द्युतिश्च यो भारतवर्षपर्षदः
स साम्प्रतं लण्डनजस्य हर्षदः ॥ ६४ ॥

इयं सखीभिः सह सा मणेः प्रभा
चिरं प्रकाश्यैव च भारते सभाः ।
पितुर्गृहाद् भर्त्तृगृहं सुतानता
यथा: समाहर्त्तुमिव द्रुतं गता ॥ ६५ ॥

प्रभोरथैकत्वमभीक्ष्य चेतसा
प्रयातवान् * लण्डनमेवमोजसा ।
मनःसु सान्निध्यमुपेत्य भारते
शुभञ्च शंसन्निव यः समीहते ॥ ६६ ॥

भूर्व्वरेयं समयेऽप्रभूते
शस्यं यशस्यं बहुधा प्रसूते ।
शस्यानि लक्षार्द्धमितानि वर्षे
प्रायः प्रसूते निरता च हर्षे † ॥ ६७ ॥

सौभाग्यलङ्कारचमत्कृताङ्गै-
रनन्तलावण्यहृदन्तरङ्गैः ।
अनङ्गकान्त्या च विराजमाना
नारीव या भू‡र्विलसत्प्रमाणा ॥ ६८ ॥

छायामयीयं जनवृन्दमाया
हरत्यथेन्दोरपि भां सुकाया ।
लसत्फलानामिह या कलानां§
शतं शतं धारयतेऽमलानाम् ॥ ६९ ॥

* अयं कर्ज्जनाख्यः मन्त्रिरिति शेषः ।

† प्रतिवत्सरं लक्षार्द्धमितलोकसंख्यापि व्यञ्जनया उक्ता द्रष्टव्या । भूः—लण्डनभूमिरित्यर्थः । "The population of London is one-seventh of that of England and Wales."—"The County of London contains 4,536,063 persons and covers 118 square miles."—*Review of Reviews, February* 1902.

‡ भूः—लण्डननगरीत्यर्थः । § कलानां—नृत्यगीतादिविद्यानामित्यर्थः ।

सुचारुरूपैर्हृदयङ्गमान्तां
सकन्निरीच्यापि तथातिशान्ताम् ।
विस्मृत्य देशान्तरमातृभावं
यस्यां जनो योजयते स्वभावम् ॥ ७० ॥

न तादृगन्यत्र भवेदतोऽतः
विनिर्म्मितो वारिविहारपोतः ।
तथा जगत्यां जलयुद्धनावः *
लण्डप्रदेशो हि तथाप्रभावः ॥ ७१ ॥

पशौ विहङ्गे च तथैव मानवे †
न तादृशं शिक्षितमौक्षितं भवे ।
अहो तदध्यापकता च साऽद्भुता
समस्तलोकैरपि विस्मितैः स्तुता ॥ ७२ ॥

This śloka refers to the various Art Galleries of London, such as "The Royal Academy of Fine Arts (founded in 1768), The Grosvenor Gallery, The Bridgewater Gallery" &c. &c.

* रण-पोतादिकं वर्णयत्यनेन । (Various war-ships and armour-clad vessels). "London is the greatest *sea-port* in the world." "Ship-building has long been an industry of great importance in England. The principal centres are :—The Thames, The Tees, the Tyne, Sunderland, Liverpool and Whitehaven."—*Encyclopedia Britannica.*

† अधुना लण्डनीय-पशु-पक्षि-मानवादीनामसाधारणत्वं कथयति ।

कपोतदूतो जवपोतमध्यात्*
वह्निर्भवन् शीघ्रगतिं विदध्यात्।
मुखेन चादाय रणस्य पत्री-
मुड्डीयते व्योमपथात्पतत्री ॥ ७३ ॥

सुशिक्षिता झम्पविलङ्घितद्विषः
स्पृशन्ति भूमीमथवा न तत्स्पृशः।
अवन्त्युदारेऽपि रणेऽकुतोभया-
वहन्त्यथारूढजनाश्च ते हयाः† ॥ ७४ ॥

प्रत्येकवाटीषु च वीरसृष्टि‡-
र्भवेन्न वेत्येव सदास्ति दृष्टिः।
तेनैव पूर्णा नियमेन शूरै-
र्महानगर्य्यस्त्रधरैरदूरैः ॥ ७५ ॥

"नित्यं पराधीनतया§ नतानां
गतिं विजानन्तु निरस्तमानाम्।
गानस्य चोत्थानमतः कुरुध्वं
राज्यं हि वीरस्य करे निरुद्धम् ॥ ७६ ॥

* एतेन पक्षिणामसाधारणशिक्षाचातुर्य्यं प्रदर्शितं दृष्टान्तेन।

† एतेन पशूनामसाधारणशिक्षाचातुर्य्यं प्रदर्शितं दृष्टान्तेन।

‡ एतेन मनुष्याणामपि असाधारणशिक्षाचातुर्य्यं प्रदर्शितं दृष्टान्तेन।

§ आभ्यां स्वाधीनतायाः प्रशंसा क्रियते (७६—७७)।

वीरा भवन्तः प्रभवन्तु सर्व्वे
संस्थातुमिच्छा यदि जातिगर्व्वे ।
नालस्य मूर्द्धन्यधिरुह्य पाद-
मायान्तु सर्व्वे क्रमशोऽवसादम्” ॥ ७७ ॥

चारूपदेशं पृथुमेवमेवं
विश्राव्य नश्यत्परपादसेवम् ।
संग्राम-शिक्षासु नियोजयन्ते
ते शिक्षिता भूरिजयं लभन्ते ॥ ७८ ॥ *

(विशेषकम् ।)

तरुत्वचोष्णीषभृताञ्च तेषां
श्व-साहचर्य्यं पुनरस्ति येषाम् ।
न चापि भीतिर्विजनेऽप्यथास्ते
वेत्रञ्च येषां परिभाति हस्ते ॥ ७९ ॥

धूमान्धकारे विगताधिकारे
नृचक्षुषां वैरिरणावतारे ।
गर्ज्जन्ति येषां कलनादभेर्य्यः
वाद्येन माद्यन्ति तथाश्वतर्य्यः ॥ ८० ॥

सर्व्वेऽत्र सर्व्वस्य जनस्य सर्व्व-
मप्यात्मकार्य्यञ्च नवञ्च पर्व्व ।

* त्रिभिरिंराजानां समरकौशलं वीरत्वादिकञ्च कथयति (७८—८०)।

जानन्ति सम्पादकपत्रजातै-
र्दिने दिने नेत्रपथं प्रयातैः ॥ ८१ ॥*

प्रगे समुत्थाय विलोकयन् रविं
प्रवृत्तिमाप्नोति जनोऽत्र मानवीम् ।
उदन्तपत्रीयमुदन्तकीर्त्तने
विभाति यन्नित्यनवा जने जने ॥ ८२ ॥

दिदृक्षया यस्य धनार्पणैर्जना-
स्तिलक्षतः सन्त्यधिकं ह्युदाननाः ।
तडित्पथैर्वाष्परथैश्च वागतः
क्षणादुदन्तः स भवेज्जने ततः ॥ ८३ ॥

(त्रिश्लोकम् ।)

समरजयपताकानर्त्तनैरेव साकं
कलजलधरवाद्यैर्नापयन्तीव नाकम् ।
भुवननगरलक्ष्मीमानयित्वात्महस्ते
विलसति नगरीयं राज्यरत्ने समस्ते ॥ ८४ ॥

इति श्रीश्रीश्वरीये विजयिनीकाव्ये
लण्डनवर्णनो नाम दशमः सर्गः ।

* वार्त्तावाहकपत्रवर्णनं (News-papers) क्रियते त्रिभिः (८१—८३)। "The number of News-papers delivered in 1876 was 12,50,65,800." —*Encyclopædia Britannica.*





# एकादश: सर्ग: ।

इंलण्डभूद्यौरिव दृष्टिरम्या
वह्निर्नृणां बुद्धिगिरामगम्या ।
महेन्द्रनारायण*धामयुक्ता
विराजते सम्परिभातमुक्ता† ॥ १ ॥
इंलण्डभू: किञ्च दिवो वयस्या
वधूर्वशी कान्तिमती सशस्या ।
सुवर्णमुक्तामणिभि: सुभूषा
नक्षत्रजातै: सततं यथोषा ॥ २ ॥
इंलण्डभूद्यौरिव भूषिता‡ सा
निषेविता चैव महार्घभासा ।
मरुत्शिखिभ्यामतिरञ्जितश्री:
प्रपश्यतां यत्र जडीकृता धी: ॥ ३ ॥

---

* पक्षे नारा:—आप:, तेषामयनं जलगृहमित्यर्थ: । पक्षे महेन्द्र:—नरपति: । एतेन यस्मिन् जलगृहं राजगृहञ्च वर्त्तते इति गम्यते ।

† मुक्तेति—एकत्र गजमुक्तादि, अन्यत्र जीवन्मुक्तादय: ।

‡ भूषितेति—पक्षे भूम्यामुषिता, भूवासिनीत्यर्थ: ।

या मन्दिरैः सप्ततलैरुदारा
सुभूरियं कुण्डलिताभ्रिहारा ।
अथ्यस्फुरद्राक्षसजातशङ्का
विराजते स्वर्णपुरीव लङ्का ॥ ४ ॥

समुद्रवक्षःस्थितपोतमाला
स्थले तथा राजितलोकयाला ।
यन्त्रोत्थधूमैर्जनितान्धकारा *
हर्म्यध्वजाबद्धमरुत्प्रचारा ॥ ५ ॥

यस्यां स्थलेऽस्यां लिपिपत्रमस्ति
हट्टेऽपि शब्दो विरलश्च कास्ति ।
या जन्मभूमिर्वरसुन्दरीणां
ज्ञेया तथा नैव कदाप्यरीणाम् ॥ ६ ॥

या तुङ्गरूपा भवनैरनेकैः
परिस्फुरद्गैरिकवारिसेकैः ।
स्निग्धस्वभावा परिबद्धरावा
वसन्ति यस्यां विविधाश्च भावाः ॥ ७ ॥

* "The average daily consumption of coals in domestic fire-places produces a *cloud of smoke* resting for days over the central districts of the town and shutting out the sun."—*Encyclopedia Britannica.*

इष्ट्या च या चारुतया पृथिव्या-
मुदग्ररत्नेन्द्रपुरीव दिव्या ।
इमां न ये सम्परिलोकयन्ति
ते व्यर्थनेत्राणि हि धारयन्ति ॥ ८ ॥

ग्रीष्मावसानेऽपि जड़प्रधाना
विद्युल्लता यानवरैर्व्यमाणा ।
क्वचिन्नृणामाकुलिता च घोषैः
कदम्बिता क्वापि सरत्नकोषैः ॥ ९ ॥

उद्यानवापी*मुकुरादिगेहैः
सुरञ्जिताकारकुमारदेहैः ।
इयं स्थले साधितसन्निवेशा
स्वर्गद्युतिर्भूमिगतेव सेशा ॥ १० ॥

लोकातिशय्यात् परिचेतुमस्या-
लोकान्न लोकाः प्रभवन्ति यस्याः ।
इयं धियं हन्ति समागतानां
दिशां भ्रमाद्यैरतिविस्मितानाम् ॥ ११ ॥

उद्यानम्—Gardens and Parks, and open Spaces. वापी—Canals, Water-places, Baths and various Conduits.

वर्व्वर्त्ति सर्व्वोपरि पण्यशाला *
नानाधनैः सज्जितरत्नजाला ।
रक्षाप्रयत्नेन रहोगतानां
ज्वलन्ति नाङ्गानि निगूहितानाम् ॥ १२ ॥
या सृष्टिरद्यापि न भाति रोके †
नैतादृशी भूः क्वचिदस्ति लोके ।
न चापि नद्या इह तामसाया: ‡
समा नदीनस्य नदी च जाया ॥ १३ ॥
अत्रापि वानीरनिकुञ्जसत्ता
स्मरार्च्चनायास्ति यदर्थवत्ता ।
विराजते प्रान्तरचारुकुञ्जे §
विलासिनीहासविलासपुञ्जे ॥ १४ ॥

* "London possesses ample width, and the *splendour of its shops* to some extent atones for the plain monotony of its regular architecture."—*Encyclopedia Britannica.*

† रोके—हिट्टे ।

‡ The Thames.

§ Read the following in this connection :—"With its fine expanse of grass, its bright flower-beds and clumps of shrubbery, its noble old trees, its beautiful ornamental lake superfine, its broad avenues crowded with equipages,—The Hyde-Park, in the height of the season, presents a scene which in brilliancy can be paralleled nowhere else."—*Encyclopedia Britannica.*

इहापि चापेषुधरो मनोभवः
स्वयं समुज्जृम्भितकोकिलारवः ।
रतेरिहासङ्गचरीव किन्नरी
सदा प्रजागर्त्ति मनुष्यसुन्दरी ॥ १५ ॥

विद्याधरीभ्रान्तिवशाः सुगाचरः
विभान्त्यमुष्यां हि विवाहमाचरः ।
अप्यस्ति सा यौवनरत्नशोभा
वाक्कोकिलानां वरचित्तलोभा ॥ १६ ॥

यो बाहुवीर्य्यादतिदूरवर्त्ती
राजासनं काङ्क्षति चक्रवर्त्ती ।
न तस्य तद्राज्यमिहास्ति भोक्तुः
ग्रासं यथा गोर्न, हलप्रयोक्तुः * ॥ १७ ॥

बलेन सैन्यस्य च राज्यभारं
गृह्णाति यो वात्मबलैरुदारम् ।
न तस्य तस्यापि च राज्यरत्नं
चिरं वरीवर्त्ति कृतप्रयत्नम् ॥ १८ ॥

* इँलण्डीयवीराणां पराक्रमं बुद्धिबलञ्च कथयितुं प्रस्तूयते चतुर्भिः श्लोकैः (१७—२०)।

बलेन बुद्धा च सुकल्पितं यत्
तदेव राज्यं निरुपद्रवं सत् ।
न केवलेनैव बलेन शक्यं
तद्रक्षितुं यन्न धियाप्यशक्यम् ॥ १९ ॥

निशम्यतेऽद्यापि कृतप्रकाशः
बुद्धेर्बलादेव वनेतिहासः ।
आरण्यकैर्दत्तजयोपहारः *
शशोऽपि सिंहस्य जयञ्चकार ॥ २० ॥

चतुर्दिशः शत्रुभयेऽप्यखण्डे
कोलाहले युद्धभुवि प्रचण्डे ।
भङ्क्त्वा भयं बुद्धिबलादनन्यं
जयत्यहो लण्डनदेशि सैन्यम् † ॥ २१ ॥

या सार्व्वभौमासनसार्व्वभौमं
दधाति सम्मानशतेन भौमम् ।
नानाननैरुल्लिखितप्रतिष्ठा
सुभूरियं सर्व्वभुवां वरिष्ठा ॥ २२ ॥

---

* हितोपदेशादियं कथानुसन्धेया ।
† सैन्यवर्णनं क्रियते । (The army.)

इंराजवीरैः कृतदिग्जयस्य
यस्यां वसद्वैरिपराजयस्य ।
महामहिष्या इव राज्यबन्धु-
र्वाद्यान्यहो वादयतीव सिन्धुः * ॥ २३ ॥

रत्नाकरश्चतुर्थः स इवैष कोषः
कल्पान्तकालेऽपि न यस्य शोषः ।
रत्नावलीभिः परिपूर्ण एकः
जलाम्बरच्छन्ननृदृक्प्रवेकः ॥ २४ ॥

इयं पताकाघ्रतसङ्कुला भूः
समुद्रतीरे खलु यत्र सा पूः ।
इंलण्डनाम्नी नतवैरिवर्गा
शोभाकदम्बेन समग्रसर्गा ॥ २५ ॥

यस्याः पुरो द्वारि कृतप्रयत्ना
छविः समुद्रस्य निकामरत्ना ।
नित्यं नरीनर्त्ति जलांशुजाला
सफेनहासा बड़वाग्निमाला ॥ २६ ॥

* सागरवर्णनं क्रियते दाभ्यां (२३—२७)।

रत्नं समुद्रेऽधिकमत्र वेति
तन्निर्णयं नाद्य जनः समेति ।
नदी, नदीनः स, महिष्य*भीमा,—
न विद्यतेऽस्य चितयस्य सीमा ॥ २७ ॥

राजश्रियः श्रीलमहामहिष्या-
नावाकृतेः सम्प्रति मन्त्रिमिष्याः ।
प्रजाद्विरत्रासु कृतावतारा
राजन्ति यस्यामिव कर्णधाराः ॥ २८ ॥

इंलण्डना'दिं' भुवि 'राज'राजं †
वर्णं प्रगृह्यैव समाजभाजम् ।
"इंराज"नाम्नां प्रबभूव सृष्टि-
र्यन्नामभाजोऽद्भुतराज्यदृष्टिः ॥ २९ ॥

आस्तां कथा दूरतरा जनानां
यस्यामनालस्यविराजितानाम् ।
अकर्म्मकर्त्ता न मिक्षी न वायु-
र्निरर्थकं तिष्ठति यावदायुः ॥ ३० ॥

* महिषी—विजयिनी (Victoria) । नदी—तमसा (The Thames) । नदीनः—सागरः ।

† इदानीम् इंराजानां चरितवर्णना क्रियते ।

*केशेन वेशेन च दक्षताभिः
कुलेन शीलेन च पक्षताभिः* ।
यस्यां सदैकाकृतयः समाना
लसन्त्यथैराजगणा हि नाना ॥ ३१ ॥

पार्श्वानुरक्ते शकटे च बन्धौ
सान्निध्यमत्रास्ति दिनस्य सन्धौ ।
वस्त्रेण च प्रावृतगुल्फनाभिः
श्रियाङ्गनानां प्रवराङ्गनाभिः ॥ ३२ ॥

पुष्पादिभिः सज्जितचारुखट्वः †
दोधूयते स्त्रीबहुलोऽत्र हट्टः ।
मुहूर्त्तसौगन्ध्यसुखस्य हेतुः
प्रोत्थाप्यते यत्र च पुष्पकेतुः ‡ ॥ ३३ ॥

यस्यां रणाय प्रभुणा कृताज्ञः
प्रियानुमत्यै रण-संहिताज्ञः ।
कश्चिद्गृहे सज्जितचारुकाचे
प्रियां निरीक्ष्यानुमतिं ययाचे ॥ ३४ ॥

* पक्षता—स्वपक्षता, Nationality. † पुष्पादिवर्णना क्रियते ।
‡ पुष्पकेतुः—पुष्पध्वजः ।

रथो नयं यानमपि प्रयाणे
प्रिया विचिन्त्येति रथाय याने ।
नाम्नामनाम्नाञ्च ददौ प्रियाय
प्रगाढ़माश्लिष्टकलेवराय ॥ ३५ ॥

राज्ञश्च धातोश्च तथाङ्गुलीनां
स्थौनामसुद्राय नभःस्थलीनाम् ।
सा चन्द्रमुद्रा च लसन्मुद्रा
सुभूरियं राजति पञ्चमुद्रा ॥ ३६ ॥

दिने दिने नूतनमूर्त्तिभास्वराः
कलादिकानां* प्रतिभान्ति चाकराः ।
विधीयते यैर्जगदेकमङ्गलं
नखाञ्जलं तच्च सुचारुनिर्म्मलम् ॥ ३७ ॥

अपादचारा गतयो नृणां त्वरा-
कल*प्रभावात् प्रभवन्ति सादराः ।
सुविस्तृताध्वानमतीत्य सादरं
कलं मुहूर्त्तादिव याति सत्वरम्† ॥ ३८ ॥

* कलं—यन्त्रादि (various machines).
† This refers to the Bicycles and Tricycles.

अतैलदीपाः * खलु यत्र भास्वराः
निजार्च्चिषा दीपितदिग्दिगन्तराः ।
निशामुखे दर्पणगेहगामिनः
समुज्ज्वलन्त्यर्ककरप्रभाविनः ॥ ३९ ॥

उपाधिभिर्ये विलसन्ति भूपाः †
भूभारतेऽस्मिन् प्रवरस्वरूपाः ।
तन्मूलमेतन्नगरं विशालं
नानाननैः सज्जितपण्यशालम् ॥ ४० ॥

उपाधिवृष्टिर्नरचक्रवाले
प्रत्यब्दमग्रे खलु पर्व्वकाले ।
अस्ति व्ययात्तावदुपाधिराजे-
रतज्जनैर्भूर्विरला समाजे ॥ ४१ ॥

वाक्यादुरादिं दृढतामुपाधिं
नरा लभन्ते व्यवधूय चाधिम् ।
भुवं नगं खञ्च मुदा भ्रमन्ति
वाद्यादिशब्दैः परिपूरयन्ति ॥ ४२ ॥

* "The first Exhibition of Windsor's system of lighting the streets with *Gas* took place in 1807, June 4."—*Encyclopedia Britannica.*

† भारते उपाधिदानप्रथा गीयते त्रिभिः (४०—४२) ।

मनुष्यसाध्योन्नतिभिर्दुरन्तै-
स्तथार्थसाध्योन्नतिभिर्नरैर्वरैः।
विधीयते नाम समर्थनावधि-
र्भवोन्नतेर्यत्र महामहो विधिः॥ ४३॥

सरिच्च नाम्ना भुवि तामसेति *
हिताय तद्देशिनृणामुदेति।
या सुन्दरीणां प्रतिबिम्बमर्त्ति-
रत्नच्छटाम्भोजवनं बिभर्त्ति॥ ४४॥

समुद्रसंलग्नजलप्रवाहा
यद्दृष्टिभाजां न च धर्म्मदाहाः।
यस्या दृढः सागरभर्त्तृकाया-
स्तलेऽस्ति सेतु† र्जलक्लृप्तिकायाः॥ ४५॥

मीनाश्च पीना जलजालबद्धा-
भुजङ्गवत्तीरगतस्तथाऽब्धा।
द्युतिश्च दीपस्य तमो धुनाना
दिवानिशं तिष्ठति यत्र नाना॥ ४६॥

* River Thames. तमसावर्णनं पद्यभिः क्रियते (४४—४८)।

† "A *Sub-way* under the Thames from Towerhill to Tooley street was constructed in 1869 at a cost of £16,000." "The Thames *Tunnel*, begun in 1825 and completed in 1843, at a cost of £468,000, is now used as a Railway-tunnel."—*Encyclopedia Britannica.*

या चातिशीता पशुपक्षिपीता
स्तुतिश्च यस्याः पृथगस्ति गीता ।
दीपच्छलात् किं स्वयमत्युदारं
सेतुः स बध्नाति सुवर्णहारम् ॥ ४७ ॥

न कापि तस्या इह तामसाया-
स्तुल्या नदीनस्य नदी तु जाया ।
यद्भूतलान्तर्बणिगापणाली
स्वयं तदूर्द्ध्वं प्रबला जलाली* ॥ ४८ ॥

दृढो वरीवर्त्ति स सेतुपर्व्वतः†
श्रियः कदम्बैरचितस्ततस्ततः ।
तमो बलान्नैगङगेहमागतं
नियम्य वीरैरिव बन्धनङ्गतम् ॥ ४९ ॥

समुद्रवृत्तान्तशतानुबन्धः
विराजते यत्र च वारिबन्धः ।
आदर्शगेहे धृतडिम्बभारै-
रजस्रकम्पितं मत्स्यगणैरुदारैः ॥ ५० ॥

---

* आपणाली—पङ्क्तीति शेषः । स्वयमित्यादि—स्वयन्तु जलराशिस्वरूपा इति भावः ।

† अस्यां तमसाया उपरिनिर्म्मित-सेतुवर्णनं क्रियते । "There are 12 bridges over the Thames, besides the Railway bridges, the most easterly being the London Bridge and the most westerly the Hammersmith Bridge."—*Encyclopedia Britannica.*

विद्यानिवासा बहवोऽत्र सन्ति *
छात्राः प्रभूताश्च तथा वसन्ति ।
उच्चैस्तरां वेतनतः सुशिक्षाः
भृशं विभान्त्यत्र च कार्य्यवीक्षाः ॥ ५१ ॥

यस्यां कृताचारलसत्पशूनां
विजृम्भतेऽस्यां समजः पशूनाम् † ।
विकल्पलोपेन च वानराणां
कुलं वरीवर्त्ति च वा नराणाम् ॥ ५२ ॥

दूरीकृते दृश्यचनाप्रवेशे
तद्दर्शकानां विरहोऽन्यदेशे ।
द्रष्टा च बोद्धा च जनोऽपि नास्ति
सा तादृशी कृत्रिमता चकास्ति ॥ ५३ ॥

---

* पाठगृहादि वर्ण्यते (The Universities.) "It was the leading aim of the Educational reformers in Parliament both to deepen and widen education, giving the largest possible number the best instruction and a variety of measures were passed for this purpose."—*Encyclopedia Britannica.*

† यस्यां—जंतुसमूहवीथ्यर्थः । This refers to the Zoological Department of the British Museum, or to the Regent Park containing the gardens of Zoological Society and of the Royal Botanic Society.

यद्देशिहस्ते प्रथमं कुनीयान्*
ज्वरज्वरः प्रादुरभूद्गरीयान् ।
नीरं समीरश्च सुखाय भूते
राजाज्ञया किं न उभे न भूते ?† ॥ ५४ ॥

वाणिज्य‡मादाय बलञ्च बुद्धे-
रिंराजमागात् तदवाच्यवृद्धेः§ ।
अनुग्रहस्तावदतः कलानां¶
पाश्चात्यवीरेषु लसत्फलानाम् ॥ ५५ ॥

उत्साहमुत्साहवतामनन्यं
पराक्रमञ्चापि तथैव धन्यम् ।
इंराजनाम्नां मनुजोत्तमानां
न के प्रशंसन्ति वराङ्गनानाम् ? ॥ ५६ ॥

अस्मिन् प्रदेशे गणितस्य चर्चाः,
खे खेचरः खेलति चारुवर्चाः‖ ।

* कुनीयान् – Quinine (Medicine) श्लोकत्रयेण इंराजानां वाणिज्यादिकम् उत्साहबलादिकञ्च कथयति (५४—५६) ।

† ते उभे (नीरं समीरश्च) भूते जीवे किं सुखाय मङ्गलार्थं न भूते ? इति काकुः ।

‡ "In the *Trade* of London, there is a large excess of imports over exports."—*Encyclopedia Britannica.*

§ अवाच्यवृद्धेः—अवाच्या अनिर्वचनीया वृद्धिः उन्नतिर्यस्याः इति, बुद्धेर्विशेषणमेतत् ।

¶ कलानां—The fine arts.

‖ Astronomical instruments are described in this śloka.

दिनेत्वणं नाविकपङ्क्तिकाभिः
समुद्रपोतेऽपि समुद्धताभिः ॥ ५७ ॥

निर्वारिदेशेऽमलवारिकूपः
सृष्टोऽस्ति लौहैर्विवरस्वरूपः* ।
तन्मोहनास्त्रञ्च जनेऽणुमात्रं
यत्स्पर्शनं कम्पयते च गात्रम्† ॥ ५८ ॥

स्वेच्छानुसारेण नभोऽन्तराले
चेष्टास्ति याने परमा विशाले‡ ।
जातेऽत्र यत्ने सफले, जनानां
सुखं दिनं भावि भवे स्थितानाम् ॥ ५९ ॥

पदान्तरं याति कलेन हर्म्यं§
मनुष्यबुद्धेरिदमस्त्यगम्यम् ।
ब्रूते कलं काष्ठजवाक्यजालं¶
स्वरानुरूपं सनृहस्ततालम् ॥ ६० ॥

---

* Tube-wells are referred to by this śloka.

† तन्मोहनास्त्रञ्चेत्यादि—'तत्' प्रसिद्धार्थं, मोहनास्त्रञ्च सृष्टमस्तीति शेषः । The last two lines speak of the *Electrical* machines, such as Ramsden's machines, Quadrant electrometers, &c. &c.

‡ व्योमयानवर्णनं (The Baloons).

§ कलेन—यन्त्रप्रभावात् इत्यर्थः । पदान्तरं—स्थानान्तरमित्यर्थः ।

¶ This refers to the Phonograph.

चित्रस्य वाक्यं किमिहास्ति चित्रं
पटे पटे भाति विचित्रचित्रम् * ।
प्राणप्रतिष्ठा च भविचत्रमुष्मिन्
चेष्टाश्रणाः सन्ति पटेऽद्य तस्मिन् ॥ ६१ ॥
सौधस्य शृङ्गे नवकेतुसङ्गे
समुद्रवातस्य सुचारुरङ्गे ।
शतह्रदावेगबलेन यानं †
कचिद्द्रवत्येव हि धावमानम् ॥ ६२ ॥
सौधस्य शृङ्गेऽध्वनि धावमानं
दिवा च रात्रावपि वाष्पयानम् ‡ ।
चलत्पताकं चलतीति वार्त्ता
वङ्गादिके यस्य न दृष्टिकर्त्ता ॥ ६३ ॥

---

चित्रालयवर्णनम् । "The most ancient and influential institution in London connected with Painting and Sculpture is the Royal Academy of Fine Arts."

तडिद्यान (Electric carriages)-वर्णनम् । "The first attempt to apply Electric power for propulsion on Railway was made by Mr. J. Davidson, who in 1842 tried on the Edinburgh and Glasgow Railways an Electro-magnetic locomotive."—*Encyclopedia Britannica.*

ऊर्ध्वयानवर्णनम् । [The suspension bridges and stone arches are referred to by this śloka, like London Bridge and Britannica Bridge.]

तैलैस्तथा चित्रविचित्रधाम्नः<br>
रथस्य यानं शकटेतिनाम्नः* ।<br>
हिरण्यहारादिविभूषितायाः<br>
स्त्रियश्च पुंसामपि तत्र कायाः ॥ ६४ ॥

धमायमानाः ककुभोऽत्र यन्त्रै-<br>
र्जिह्मीषवोऽरीनिव मन्त्रतन्त्रैः ।<br>
नक्तं दिवा चापि समानभावाः<br>
स्फुरत्प्रकाशेऽपि तमःप्रभावाः† ॥ ६५ ॥

कलादिविज्ञानविधौ सुयन्त्रं<br>
हर्म्यादिपृष्ठे ग्रथितं स्वतन्त्रम् ।<br>
नानाविधं स्पन्दितकण्टकं तत्<br>
शब्दायते स्वेन बलेन शश्वत् ॥ ६६ ॥

स्नानं तथास्मिन् प्रभवेन्न नित्यं‡<br>
नृणां तथापि व्ययितव्य वित्तम् ।<br>
निमज्जनस्नानविधिश्च कास्ति<br>
मुदाङ्गनानां गतिरत्र चास्ति ॥ ६७ ॥

---

* तैलयानवर्णनम् । [Coaches, cabs and omnibuses are referred to by this sloka.]

† द्वाभ्यां नानाविधयन्त्रादिवर्णना क्रियते (६५—६६) ।

‡ स्नानागार (Bathing places)-सन्तरणपाठशालादिवर्णनम् । "On a hot Sunday, as many as 25,000 bathers have been counted in Victoria Park."

सन्तारशिलासु च पाठशाला
क्वचिज्जले भातितरां विशाला ।
तत्रापि नारीमुखचन्द्रबिम्बै-
र्जलानि भान्तीव च चन्द्रबिम्बैः ॥ ६८ ॥

यस्मिन् मृतानां कवयो निवेशिताः *
शुभे पटे प्रास्तरिके सितासिताः ।
हरन्ति चेतांसि मृता इवामृताः
समादरैर्ये प्रवरासने कृताः ॥ ६९ ॥

एकञ्च पाणिग्रहणं प्रसिद्धं
नारीद्वयं यन्नृपतो निषिद्धम् ।
ततः सपत्नीकलहप्रबन्धः
नास्त्येव, नास्त्यत्र जनोऽपि मन्दः ॥ ७० ॥

निमीलितेवात्र जडेन चेतना,
जडोन्नतिश्चारुतरा महाधना ।
पदार्थविद्याभि†रदन्तकीलिता
श्रुतिस्पृहा तीव्रतरास्ति शीलिता ॥ ७१ ॥

---

पाषाणादिरचितमूर्त्तिकायवर्णनम् । "The *monuments* in the north and south aisles of Westminister Abbey are of a very miscellaneous character and commemorate musicians, men of sciences, travellers, patriots and adventurers."—*Encyclopedia Britannica.* यस्मिन्निति — ५७-श्लोकीय "प्रदेशे" ।

पदार्थविद्या—Physical Science.

अलं निरुक्त्या, न च वस्तु खर्व्वं
राज्यानुमेयं भवनञ्च सर्व्वम् ।
तैस्तैर्धनैर्यत्परिपूर्य्यमाणं
धत्ते प्रमाणाधिकमात्ममानम् ॥ ७२ ॥

यद्देशिनामीश्वर-दृष्टिदृष्टः
विश्वास-भाजां स बभूव ख्रुष्टः* ।
यः पञ्च-पूपेन† बहुप्रमाण-
तृप्तिं पुरानेकमुखीं ततान ॥ ७३ ॥

मेरीति‡ नाम्नास्य बभूव माता
या स्वर्गतो गामिव सम्प्रयाता ।
स्वदेशवाग्भिर्घटितावधानः
गर्भेऽप्यसौ ब्रह्म-गिरं ततान ॥ ७४ ॥

गर्भेऽस्य मातुः क्षतकर्णदानात्
शुश्राव काचिद्वनितानुमानात् ।

---

* अधुना सर्गसमाप्तिं यावत् श्रीश्रीमद् योशुख्रुष्ट-(Jesus Christ) वर्णना क्रियते ; तस्यालौकिकक्रियाकलापादिकञ्च कथयति ।

† "When I brake the *five* loaves among *five thousand*, how many baskets full of fragments took ye up? They say unto him twelve."—*St. Mark*, *Chap. VII*, 19.

‡ Virgin Mary. "And the angel said unto her, Fear not, Mary : * * Thou shalt conceive in thy womb and bring forth a son, and shalt call his name Jesus."—*St. Luke*, *Chap. I.*, 31.

शिशोर्मुखादीश्वरनामवाणीं
पवित्रसक्तोष्विव "पावमानीम्" * ॥ ७५ ॥
अथैकदा दुर्द्दिनमद्भुतोदयं
निरीक्ष्य शिष्याय ददौ च सोऽभयम् ।
समुद्रपोते विहरन्ननाविल-
स्ततो बभौ स्मेरमुखो मरुज्जलः † ॥ ७६ ॥
न वारयामास स शूलदानृ‡-
नथास्मरद्यो भुवि सर्व्व-मातृः ।
अघं समादाय जगज्जनानां
शिवप्रदोऽभत्परितापितानाम् ॥ ७७ ॥
अवैदिकेनैव पथागतं नरे
यमब्रुवन् क्लैच्छिकमीश्वरं परे ।
तथेतरे प्राङ्गरिमं जितान्तरं
दिवश्च्युतं सिद्धनरं वराद्वरम् ॥ ७८ ॥

* "And it came to pass that when Elizabeth heard the salutation of Mary, the *babe leaped in her womb*."—*St. Luke, Chap. I.*, 41.

† "And there arose a great *storm* of wind and the waves beat into the *ship*, so that it was now full. And he arose, rebuked the wind and said unto the sea, Peace, be still : And the *wind ceased*, and there was a great calm. And he said unto them, Why are ye so fearful, how is it that ye have no faith ?"—*St. Mark, Chap. IV.*, 37, 39, 40.

‡ "And when they were come to the place, which is called

परेऽद्युवन्नीश्वरदूतमेनं
पुनर्जितस्वःपुरसिद्धसेनम् ।
यद्दर्शनाद्द्रुद्रुवुरेव रोगा*-
स्तद्यातनाभिः सह दीर्घभोगाः ॥ ७९ ॥
श्रीश्रीश्वरस्यैव मनःप्रसूतं
यं पुत्त्रमाहुर्नृशरीरभूतम् ।
संस्पर्शमात्रेण विनष्टशोके
नानाकथा पल्लविताच्च लोके ॥ ८० ॥
अनेकमित्यादिकमित्यमद्भुतं
तदीयकर्म्माभिनिरीक्ष्य सत्स्तुतम् ।
विसिष्मिये द्वीपनिवासिभिर्नरैः
स तुल्यतेऽद्यापि तथा सहेश्वरैः† ॥ ८१ ॥
सोऽयं महान् लण्डननामदेशः
सर्व्वप्रदेशादपि यो विशेषः ।
यो भारतात्पश्चिमसिन्धुपारे
सदा वरीवर्त्ति नृणां प्रचारे ॥ ८२ ॥

---

Calvary, there they *crucified* him."—*St. Luke, Chap. XXIII.*, 33.

* "Now when the sun was setting, all they that had any *sick* with *diverse diseases* brought them unto him; and he laid his hands on every one of them, and *healed* them."—*St. Luke, Chap. IV.*, 40.

† ईश्वरैः—The devas, Gods.

भ्राम्यन्तौ भूविभागे चितहृदयगतौ
घूर्णयन्तौ द्रुमादिं
दूरस्थैः सर्व्वलोकैर्हृतमतिभिरलं
वीक्षितौ विस्मितयौ ।
यद्राज्ये वाष्पयानौ * भुवनतलगतान्
जेतुमुन्मत्तरूपौ
वायू द्वौ स्पर्द्धवन्तौ किमु गगनतला-
द्धावितौ प्राक्प्रतीच्योः ? ॥ ८३ ॥

निस्तैलतैलमधुकोत्थ-मधूत्थगव्य-
स्नेहादिभिः शिखिशिखाः खलु दीपसंज्ञाः ।
उद्दीपयन्ति नगरस्य वरां धरां तां
ज्ञानाग्निभा इव सभां भुवि विस्तराग्राः ॥ ८४ ॥

इति श्रीश्रीश्वरीये विजयिनीकाव्ये इंलण्ड-
वर्णनो नाम एकादशः सर्गः ।

* अर्द्धर्चादिगणपाठात् यानशब्दस्य वैकल्पिकपुंलिङ्गता । This is a description of two Railway carriages running side by side in the opposite directions.





# द्वादशः सर्गः ।



सखीमिवासाद्य मनःप्रियक्रियां *
वशङ्गता भूर्न च भारती भियाम् ।
नवेव सासीच्च सखीकृतादरा
न जीर्णभावाक्रमणेन मन्थरा ॥ १ ॥

चिराय पुंस्कर्तृविरक्तभावा
स्त्रीराजतायामिव बद्धहावा ।
क्षाराब्धिहारा हृदियं सवङ्गा
रराज सा या परिभास्वदङ्गा ॥ २ ॥

अयःप्रलम्बाकृतिमेखलाभि-
र्मार्गोपरिन्यस्तरथप्रभाभिः ।
धूमावली-कालकचैर्विशिष्टा
नारीव भूषावलिभिर्वनिष्ठा ॥ ३ ॥

---

* राज्ञ्या विजयिन्या जीवितकाले भारतभूमिस्तस्याः सखीवासीदिति मनसिकृत्य पञ्चभिर्भारतभूमिं वर्णयति (१—५) ।

वङ्गादिपुत्त्रैः प्रणतैश्च माता
सखीकृतस्नेहगता विभाता।
करं प्रदायात्मसखीकराभ्यां
ननन्द तैस्तैः सह वन्दिताभ्याम् ॥ ४ ॥

निशागमे वाष्पमयैः प्रदीपै-
र्हीरोपमैर्ध्वस्तमहत्प्रतीपैः।
नवेन शाखानगरेण भूयः
ललास या द्युद्युतिकां विधूय ॥ ५ ॥

(कुलकम्।)

सिराजदोषोऽद्य गुणाय मन्ये
येनेह राज्ञ्याः कमला निनिन्ये * ।
प्रजाविरक्तिर्यदि नाभविष्यत्
कुतो जयिन्यास्त्वविरागमिष्यत्? ॥ ६ ॥

अशेषसौभाग्यभृदग्रगण्यां
मान्यां वदान्याञ्च तथैव धन्याम्।
राज्ञीं हि लब्ध्वा स्थिरवाक्प्रतिज्ञां
कथं न नन्दाम इमाञ्च विज्ञाम्? ॥ ७ ॥

* सिराजः—Sirajooddoula, Nabab of Bengal, Behar and Orissa.
राज्ञ्याः कमला—राजलक्ष्मीः विजयिनीत्यर्थः।

राजन्ति साहेबसमाख्यया ये*
राज्ये जयिन्या नृवराः समाजे ।
तेषां सतामेकधियङ्गतानां
भङ्गोऽस्ति नैषां सहसा मतानाम् ॥ ८ ॥

निवार्य्यते स्वात्मजनेष्वकार्य्यं
मुदैकवाक्याः परिपान्ति राज्यम् ।
नृणां सहस्रेण परीक्ष्य कार्य्यं†
कुर्व्वन्ति यत्तन्न भवेदनार्य्यम् ॥ ९ ॥

न मन्त्रणानां क्वचिदस्ति भङ्ग,-
स्तेषां मनोऽब्धेः शुभगस्तरङ्गः ।
प्रबोधगम्यो न च यः कदाचित्,
जागर्त्ति यस्मिन्न वहिर्नृ-संवित् ॥ १० ॥

प्रजाहितेभ्यो लिपिमाहिताज्ञा-
स्ते चारुचेष्टा रचयन्त्यभिज्ञाः ।
मुद्राङ्कितां तां परिघोषयन्ति
वङ्गादिदेशेष्वपि नोदयन्ति‡ ॥ ११ ॥

* इदानीं नवभिः इंराज-राज-पुरुषाणां मन्त्रणाप्रकारं कार्य्यकरणरीतिञ्च कथयति (८—१६)।

† The Government of India is divided into 7 departments: The Military, the financial (including post office, telegraph, trade, commerce &c.), the foreign, the legislative, the home (including education, medical and sanitary measures, police, jails &c), the revenue and the Public works departments.

‡ एतेन मुद्रायन्त्रैरङ्कित पत्रादिभिः (official correspondence, despatches,

सप्ताङ्गचिन्ताविनिमग्नचित्ताः
पत्रेषु संख्यीकृतराजवृत्ताः।
ध्यायन्ति तेऽर्थानथ तेऽर्थसार्थाः
प्रयान्ति यान्ति प्रभुमङ्गलार्थाः* ॥ १२ ॥

ये† स्थावरा अप्यपदप्रचारा-
स्तथापि याने तुरगप्रकाराः।
द्रवन्ति वेगैरिव जात-रङ्गा
यथा समुद्रस्य चलास्तरङ्गाः ॥ १३ ॥

(युग्मकम् ।)

तेषाञ्च "भोटस्य" निशम्य रावं‡
स्वार्थात्मको गर्त्तगतेऽपि नावम्।
विलङ्घ्यतेऽन्याधिपतेर्हि भोटै-
र्भम्पेन सिंहध्वनिनेव घोटैः॥ १४ ॥

भोटेतिसंज्ञां प्रवदन्ति यस्य
मतन्तदेतत् स्मृतिसागरस्य।

---

reports, resolutions, statements &c. &c.) राजकार्य्यपरिचालनरीतिः प्रदर्शिता।

* अर्थान् ध्यायन्ति—एतेन इंराजानामर्थनीतिशास्त्रे (Political Economy) पारदर्शिता उक्ता।

† ये—"यथा" इति यावत्। अनेन श्लोकेन यानस्य चपलतां वर्णयति कविः।

श्लोकद्वयेन मन्त्रणासभासु (Councils and meetings) राजपुरुषाणां मन्त्रणरीतिः प्रदर्शिता। ‡ भोटेति—The Voting system.

स्मृतेरयं क्षुद्रतरङ्ग एकः
स्वयं भवेत् संशयहृद्विवेकः ॥ १५ ॥

(युग्मकम् ।)

निरस्त-तन्द्राः किल गूढ़-मन्त्राः
सयत्न-सञ्चिन्तितराज्यतन्त्राः ।
ते सन्ततं कार्य्य-शतानुबन्धै-
रवन्ति राज्यं नियमैरवन्ध्यैः ॥ १६ ॥

(नवभिः कुलकम् ।)

उपानहाडम्बरमन्यकाले *
नैतादृशं नाम भुवोऽन्तराले ।
न कोऽप्यपश्यन् शकटं सुखाय,
पत्त्राप्ति†मप्यल्पधनं प्रदाय ॥ १७ ॥

ईदृक् न शिल्पी, न च शिल्पवस्तु
निरीक्षितं कैरपि पूर्व्वतस्तु‡ ।
अल्पेन मूल्येन च दीयते तत्
सुखं भवेत् सम्प्रति किं तदन्यत् ? ॥ १८ ॥

* इदानीं षोड़शभिः श्लोकैर्भारतस्य इंराजकृता विविधसुखस्वाच्छन्द्यादिकथा कीर्त्यते । (१७—३२) । [For *other benefits* conferred on India by the present rulers, vide Canto I., 38—69 and Canto IV., 66—71.]

† पत्त्राप्तिरिति—refers to the cheap postal system.

‡ "Cotton and Jute-mills, the trade in tea and coal and many other branches of industry are altogether due to the British."

भोगैर्विशालैरिह भीषयन्तः
महापथा दीर्घतरा लसन्तः ।
त्रियोजनादूर्द्ध्वमुपात्तसङ्गाः
पृथक्-प्रयाणा इव ते भुजङ्गाः * ॥ १९ ॥

विभान्ति यानाय सुखस्य हेतवः
महामहिष्यर्थचयेन सेतवः ।
समस्तपृथ्वीग्रहणेऽपि यद्बलं
प्रगृह्य तत् किं गिरयः स्थिता अलम् ? * ॥२०॥

अल्पव्ययेनाद्य सुखं यदाप्तं
बहुव्ययान्नैव पुरा तदाप्तम् ।
जाग्रत्-सुखं भारतवर्षमद्य
जनेन मानेन धनेन सद्यः ॥ २१ ॥

करप्रदानाय न च त्वरास्ते
त्वदां क्षतिर्हस्तगता यदास्ते ।
न पूर्व्वनृणामियमेव नीति-
रासीत्प्रजाकायगता च भीतिः † ॥ २२ ॥

---

* "Roads, canals, bridges are constantly on the increase through the activity of the P. W. Department." सेतवः गिरय-इव स्थिता इत्यर्थः ।

† अधुना भूमिकरग्रहणप्रथा वर्ण्यते ; तत्रादौ त्रिभिः पूर्व्वकालीनकरग्रहणप्रथां विवृणोति (२२—२४) । "The ancient remedies for default of payment of revenue were *imprisonment* and *corporal* punish-

ते * वेष्टयित्वा खपुर-त्वषाङ्कं
तत्रापि कृत्वावरण-प्रसङ्गम्।
भीताः करं दातुमुपाययुः प्राक्
करत्रुटिर्यष्टिभयावहा द्राक्॥ २३॥

लब्ध्व्यमर्थं करदेन नीतं
विलोक्य च न्यूनतया परीतम्।
न तत्र यष्टिर्विदधेऽनुकम्पां
ददौ च तद्गात्रविलाय झम्पाम्॥ २४॥

फलत् सुखातुर्थ्यमिदं नृलोके
न याति लोकः खलु तेन शोके।
पुरा न केषामपि वा नराणा-
मयं क्रमः प्रस्फुरितः कराणाम् †॥ २५॥

करत्रुटौ भूमिमतान्त्र तद्विदः
परक्रयं ये प्रदिशन्ति तन्मुदः।

ment. The remedy for arrears of revenue *is now* the *sale* of the estate or tenure."—*Phillip's Land-tenure of Lower Bengal.* यत्—यस्माद्धेतोरित्यर्थः। अदात् क्षतिः—*i. e.* by sale.

* ते—पूर्व्वकालीना नराः, प्रजा इत्यर्थः। "यष्टिं वेष्टयित्वा" इत्यादि तु यष्टिपात-भयादिति द्रष्टव्यम्।

† त्रिभिरधुनातनकरग्रहणप्रथा वर्ण्यते (२५—२७)। सुखातुर्थ्यं—भूमिकरग्रहणमित्यर्थः।

तदीयदुःखैरनु भान्ति सव्यथाः
भ्रमन्ति यद्राज्यविधेर्हि ते यथा * ॥ २६ ॥

कार्य्यो पताकाद्रियते तदानीं
यदा प्रजोपैति निलामहानिम् † ।
ते तेन मन्ये नृपकार्य्यवन्तः
ध्रुवं न विन्दन्ति सुखानि सन्तः ॥ २७ ॥

शिक्षा न धत्तेऽन्त्यजजातिजां इच्छाम्
उपात्तविद्याधनमन्दिरं नृणाम् ।
प्रदृश्यते सम्प्रति यन्नतानते
जने जनेऽतः सुखमेवमेधते ‡ ॥ २८ ॥

उपद्रवो नास्त्यधुना, प्रकाण्डं
शान्तान्तरं भारतराज्यखण्डम् ।
पुरा प्रजाद्वन्द्वमभूत्स्वचेष्टं
तस्या वयं प्राप्तफला यथेष्टम् § ॥ २९ ॥

---

* अनु—पश्चादित्यर्थः । प्रजानां निलाम-(Sale)-जातदुःखेन सव्यथास्ते इंराजाः भान्तीति ; यतस्ते राजकृतनियमे भ्रमन्ति, अतः किं कुर्य्युरित्यर्थः ।

† निलाम—Sale of land for arrears of revenue. ते—इंराजा इति यावत् ।

‡ "The colleges and schools are open to *all classes* of people."

§ "One of the most marked features of the history of the British rule in India is the *abiding peace* which it has established throughout the country."—*Mukherjee's History of India.* स्वचेष्टं—पलाशीयेचे इंराजानामागमने इति शेषः ।

यदाज्ञया सद्वणिजां प्रसादात्
समुद्धृतं भारतमात्मसादात् ।
राज्ञीं विनिन्दन्ति य एव मूढ़ा-
स्ते बालिशाः सन्तु निकृत्तचूड़ाः ॥ ३० ॥

ऋणत्वेनादत्तं द्धुषविधिना पुष्टमपि तत्
धनं येभ्य,स्तेभ्यः पुनरपि ददात्यद्य दयया ।
क इंराजादन्ये परहितगुणग्रामधवलाः
स-जापानास्तिव्वद्रुषनृपति-चीनेश्वरमुखाः ? * ॥३१॥

नोटाख्यानल्पकल्पद्रुमविपिनवरो-
द्यान निर्म्माणदक्षै-
रिंराजैर्भारते तैः कति कति न कृताः
सूपकारप्रबन्धाः ? ।
मुक्ता लोकाः स्वभाराद्धनवहनपरा-
दस्युमध्येऽपि सन्तो
वस्त्राणां कोटरान्तर्दृढ़तरकटयो
नोटरिक्थं वहन्ति † ॥ ३२ ॥

* This śloka refers to the Post-office *Savings-Bank* system in India. आदत्तं – गृहीतमित्यर्थः । वृधुषं – *i. e.* interest, सुद इति भाषा । ददातीति—इंराज इति शेषः । जापान = Japan ; तिव्वत् = Tibet ; रुष = Russia ; चीन = China.

† This śloka describes the advantages derived by the Indians from the use of the *Paper-currency.* स्वभारात् मुक्ताः—धनवहन-भारादिमुक्ता इत्यर्थः ।

सदैकता चारुतरा त्विषद्विषां
जगज्जयिन्येव निकाममिंलिशाम् ।
यथास्मदेऽन्यत्र तथेह भारते
शुभाशया कोऽपि न च प्रजायते ?* ॥ ३३ ॥
धात्रा पुरा भारतमेतदिष्टं
सृष्टं तदत्यग्रगुणैर्गरिष्ठम् ।
न वेपते यच्च धुराश्रयेन
न पीड्यते वापि बहुव्ययेन † ॥ ३४ ॥
समस्तभू-मानव-मानवीनां
भुजिक्रियामात्मरुचेरधीनाम् † ।
ददच्च यद्वर्षमुपैति शश्वत्
तद्भारतं नाम पदं हि भास्वत् ॥ ३५ ॥
खण्डास्तथान्येऽपि विदेशजाताः
निमन्त्रिता एव मया, विभाताः ।
कुर्वन्तु सान्निध्य,मिदं चकास्ति,
त्वतिस्तिलाद्वैन समास्य नास्ति ॥ ३६ ॥

एवं षोडशभिः श्लोकैः इंराजकृतं भारतस्य विविधसुखस्वाच्छन्द्यादिकमुल्लिख्य,—सम्प्रति इत आरभ्यासर्गसमाप्तिर्भारतवर्षवर्णनं कर्तुं तदेव प्रस्तूयते । "इंलिशां"—i. e. of the English, इंराजानामित्यर्थः । यथा—एकतया इत्यर्थः । प्रजायते—प्रजा इव आचरति क्यङ्प्रत्ययः ।

"India is a *large* country, rich in natural resources, possessing a *huge* population, claiming as her sons *many races* of men."—*The Citizen of India.*

अविस्तृते राज्यपदे वसन्तः
न तृप्तिभाजः खलु ये भवन्तः ।
आयान्तु ते तूर्णमिदं चकास्ति,
अतिस्तिलार्द्धेन समास्य नास्ति ॥ ३७ ॥

(युग्मकम् ।)

जगज्जनानां सह दृष्टिपातै-
स्तैस्तैरुदारैरपि शीतवातैः ।
समुद्र-कल्लोल-घटा-प्रवाहा-
वर्षन्ति यस्मिन् वरवारिवाहाः ॥ ३८ ॥

यतो दरिद्रस्य दरिद्रताया-
नास्ति प्रवेशो बहुदुःखदायाः ।
समाह्वयच्चास्त्यृतुषट्कमुच्चै-
र्यद्वक्षमध्यं पृथुधान्यगुच्छैः ॥ ३९ ॥

सदोर्व्वरा भूर्ह्लिनोऽस्ति कोमला
स्मरप्रवीरस्य यथा वराबला ।
षड्र्त्तुशस्येन धनेन शोभिता
सदात्तदुग्धेव च कामधुक् स्थिता ॥ ४० ॥

क्वचित्क्वचिद्भूः खलु देवमातृका
प्रसादभावैश्च लसद्विधातृका ।
न याचते वारिवहात्ततः पयः
ऋताश्च शस्यत्रुटिसंक्षकारयः * ॥ ४१ ॥

पदे पदे यत्र वनानि सन्ति
फलैश्च पुष्पैरपि गन्धवन्ति ।
गर्ज्जन्ति येषु प्रबला वृकाद्या-
येषां मनुष्याश्च मृगाश्च खाद्याः ॥ ४२ ॥

जम्बीरकान्तारकदम्बमाला
भृङ्गस्य भृङ्ग्याश्च विहारशाला ।
अन्यानि यस्मिन् गहनानि सन्ति
शतैः फलानां नवकान्तिमन्ति ॥ ४३ ॥

वने तथा व्यञ्जितपुच्छकेशा
पदार्पणात् † पूततरप्रदेशा ।
सदागतिप्रोत्थितपादरेणु-
र्यस्मिन् वरीवर्त्त्यथ कामधेनुः ॥ ४४ ॥

* "The highlands, plains and lowlands of India present a great *variety of climates* and of the *earth's product.*"—*The Citizen of India.*

† पदार्पणात्—द्रवस्ती विषरणादित्यर्थः ।

व्याघ्रा वराहादिगिरा लसन्तः
शब्देन भूमिं परिकम्पयन्तः ।
वराहमारभ्य सभां पशूनां
विलोकयन्तीह न केऽव्यसूनाम् ?* ॥ ४५ ॥

चतुष्पदाः पर्व्वततुल्यकायाः
समष्टयो भूष्विव कृष्णतायाः ।
द्रुमान् विमर्द्दन्ति छतद्विदन्ताः
सिंहोऽपि येषां न भवेच्च हन्ता ॥ ४६ ॥

तेषां क्रयैर्विक्रयणैरुदारं
जना लभन्ते बहुरिक्थभारम् ।
वनेऽपि सङ्कीर्णलतान्धकारे
नेच्चे नृणां कूपविलप्रकारे ॥ ४७ ॥

वायोः प्रभावान्नतमस्तकायाः
फलानि गृह्णन्ति† लताबलायाः ।
विदूरिते द्राक्षुधके सदंशे
फलस्तनायाः फलिते च वंशे ॥ ४८ ॥

(युग्मकम् ।)

* अव्यसूनाम्—अवशतानां, प्राणविशिष्टानामिति यावत् ।

† जनाः चतुष्पदानां (पूर्व्वश्लोके उल्लिखितानां) क्रयविक्रयैरिक्थभारं लभन्ते, सङ्कीर्ण-लतान्धकारे वनेऽपि लतायाः फलानि च गृह्णन्तीति श्लोकचतुष्टयान्वयरीतिः ।

वनञ्च कल्पद्रुमतुल्यकच्चं
फलैर्जगद्भोजनदानदच्चम् ।
दूराच्च लच्यं बहुतालतालं
क्वचिच्च पुष्पाढ्यलताजटालम् ॥ ४९ ॥

तरुस्तथाम्रस्य* गुरुश्रिया लसन्
नवा नवोद्यानधरासु संवसन् ।
करोति रम्यं मुकुलैः स भूषयं
मधूद्भव-घ्राणगुणैश्च दिग्जयम् ॥ ५० ॥

मधुस्रवेणापि ततोऽधिकेन
फलेन नन्‌ प्रीणयति च्चणेन ।
जित्वा द्रुमान् भूमिभवान् विराजः
प्रकाशते यः फलराजराजः ॥ ५१ ॥

वाद्येन भृङ्गाननसम्भवेन
फलाय धावत्खगयाचकेन ।
छत्रीकृताकेन्दुरिवोत्तमाङ्गे
राजेव यो राजति भारताङ्के ॥ ५२ ॥

* चतुर्भिः आम्रवृक्षवर्णनं क्रियते (५०—५२)।

यद्दर्शनायापि च भारतान्तात्
फलानि राजन्ति तथा दिगन्तात् ।
एकञ्च जम्बीरफलञ्च पीतं
न चैति, कालेन च तद्गृहीतम् ॥ ५३ ॥

या सूतवंशा भुवि पावनानि
भूत्वा स्वयं भोजनभाजनानि ।
परोपकारे गलितात्मदम्भा
यस्मिन् सदा भाति फलेषु रम्भा * ॥ ५४ ॥

अवारितद्वा इव सर्व्वकाले
फलेन पूतेन च लोकजाले ।
त्वचा पलाशेन च लोकयात्रा:
प्रवर्त्तयन्तीव कृता विधात्रा ॥ ५५ ॥

मूलेष्विवारच्य निजावघातं
या धारयेन्मूर्द्धनि वज्रपातम् ।
सदा फलेनैव विधाय पूर्त्तीः
फलत्फलेयं फलिनीन्द्रमूर्त्तिः ॥ ५६ ॥

* त्रिभिः कदलीतरुवर्णनं क्रियते (५४—५६) ।

फलैर्जलैश्चैव तथातिवेल-
मितस्ततो राजति नारिकेलः* ।
तथान्यमूर्त्त्या विलसद्दलानि
मूलान्यनन्तानि तथा फलानि ॥ ५७ ॥

सितासितं पुष्पमथाच लोहितं
यदीयगन्धेन जगद्विमोहितम् ।
यदुल्लसद्भ्रामरझम्पझङ्कृति-
र्निवारयेत् पान्थनृणां क्षणं गतीः ॥ ५८ ॥

वसन्ति यच्चापि† निकुञ्जकोटरे
निगूहितं पल्लवतान्तरोदरे ।
चलन्नराः सौरभदीपदर्शनात्
मधुव्रतानाञ्च कृताभिसर्पणात् ॥ ५९ ॥

इयं धरा‡ सर्षपतैलमूला
कार्पासजन्मोन्नतिसद्दुकूला ।
महौषधीनां प्रसवेऽनुकूला
सर्व्वप्रदेशस्य तथैव चूड़ा ॥ ६० ॥

* त्रिभिर्नारिकेलवृक्षवर्णनं क्रियते (५७—५८) ।   † यत्—पुष्पमिति यावत् ।
‡ इयं धरा—भारतभूरिति यावत् ।

विशुद्धहेमेष्टकजातधाम्नां *
सुखाकराणाञ्च सुवर्णनाम्नाम् ।
विनापि दीपादिभिरेव येषां
निभा विभान्तीह निशासु तेषाम् ॥ ६१ ॥

अद्यापि यस्मिंश्च सभासकाशे
निदाघकाले धनिनां निवासे ।
ऋते प्रदीपात् कुरुते तथाभ्र-
खण्डं * त्विषा द्राक् तमसाञ्च भस्म ॥ ६२ ॥

अयं प्रदेशो विगतात्मनिन्दः
यस्मिन् गिरीन्द्रः प्रतिभाति विन्ध्यः ।
तथैव संसार-समुद्र-तर्थ्यः
सप्तालये † जाग्रति सप्तनार्थ्यः ॥ ६३ ॥

हिमाम्बुवर्षैर्खग-पक्षि-हर्षै-
रवि-प्रतापस्य तथाभिधर्षैः ।
तद्भारतं रक्षति गोत्रराजः ‡
ततः प्रवृत्तश्च नृणां समाजः ॥ ६४ ॥

* "Mineral wealth of India in *gold* and coal is considerable."—*Lee Warner.*

† सप्तालये—"अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरी द्वारवती चैव सप्तैते मुक्तिदाः स्मृताः" इति । "अयं प्रदेश" इति—भारतवर्षमिति यावत् ।

‡ हिमाचलवर्णनात्मकोऽयं श्लोकः ।

स्वर्णं विवर्णं न च गृह्यते हि तत्
हृतादरं काननसीम्नि लोष्ट्रवत् ।
निरीक्षणादेव रसाक्ततालुका
सरिच्च यत्रास्ति सुवर्ण-वालुका * ॥ ९५ ॥

यस्मिन् पवित्रादपि सा पवित्रा
गत्वा निबद्धेव तथा भवित्रया ।
नृणामघं सागरयातसङ्गा
भिनत्ति तीर्थैः सह तीर्थगङ्गा † ॥ ९६ ॥

येयं शतास्यैरिव चारुहास्यैः
तुङ्गैस्तरङ्गैः प्रमदेव लास्यैः ।
समुद्रमूर्त्तेरहि-रत्न-हार-
रुद्रस्य कण्ठं तरसा दधार ॥ ९७ ॥

(युग्मकम् ।)

मुक्तिप्रदैः कोटिमितैश्च लिङ्गैः
विभाति यस्मिन् गृहतुङ्गशृङ्गैः ।
गङ्गाजलैः श्लोककलैः प्रसिद्धं
घनं सदानन्दवनं सद्द्रुमम् ‡ ॥ ९८ ॥

* This refers to the river *Suvarṇa-rekhá.*

† आभ्यां गङ्गां वर्णयति (९६—९७) ।

‡ एतेन काशीं वर्णयति ।

अस्मिन् वरीवर्त्ति सदा नदीनः *

यो रत्नजालैर्धनवान्न दीनः।
प्रतिग्रहैरप्यथ यो विहीन-
स्तरङ्गकैर्नित्यनवैर्नवीनः॥ ६८ ॥

स्फीतां जलैः पुष्यते च वेलां
दधच्च नित्यं नवनाव्यखेलाम्।
श्रमो न चास्ति न वा विरक्ति-
र्वपुःप्रमाणानि वचांसि वक्ति॥ ७० ॥

विहाय तातं गिरिमूर्त्तिभातं
मात्रा च दत्तं सुखसन्निपातम्।
उन्मथ्य नृणां दुरितानि सद्यः
यस्मिन् विराजन्ति समस्तनद्यः॥ ७१ ॥

भूत्वा तदन्तःसलिलाश्च नद्य-
स्तं यान्त्यगात् जन्म पुनः प्रपद्य।
धातुर्जलाकर्षणयन्त्रमेतत्
ख्यातं सरस्वानिति संज्ञया तत्॥ ७२ ॥

* षड्भिः सागरवर्णनं क्रियते (६८—७३)।

नादैरधःकृत्य स सिंहनादं
तन्वन्निवाभ्रध्वनिभिश्च वादम् ।
दधज्जलेन्धं बड़वाग्नितेज-
स्त्रासाय एष्यत्रा इव ढौकते यः ॥ ७३ ॥

झषादिकान् चेतयते निजोदरे
क्षिपंश्च प्रस्थाय जलं तटे वरे ।
परोपकाराय विलासभागयं
जयश्च यस्यास्ति, न चास्ति यद्भयम् ॥ ७४ ॥

यो राजधानी जलदेवतायाः
पतिश्च गङ्गादिसरिद्वटायाः ।
मरुत्-सखि-प्रेरितवारिचारः
जलावलीं ताण्डवयत्युदारः ॥ ७५ ॥

प्रतिग्रहार्थं निधिरप्यनेयः
कबन्धबन्धो न च यस्य पेयः ।
विभात्यसेतुः कृपणोऽपि दाता
समुद्रनाम्नायमपां विधाता ॥ ७६ ॥

(षड्भिः कुलकम् ।)

इहैव* यज्ञैर्विविधैः समीजिरे
भृशं नृपाः कीर्त्तिषु चापि रेजिरे ।
महत्तपर्षीणां परमार्थचिन्तया
गतिर्बभौ ब्रह्ममुखी यथेष्टया ॥ ७७ ॥

अगणितगुणराशिर्भारतीयाम्बिकेयं
सुरनरहृदि यस्याः सूक्तमस्त्युच्चगेयम् ।
त्रिविधसलिललीलापूतयद्भूविभागः
विलसति कृतपूर्व्वब्रह्मयागः प्रयागः ॥ ७८ ॥

क्ला(इ)वस्यापि† च दौर्गतापि विधिवत्
मीर्जाफराधिष्ठिता‡
दूरादन्यकटाक्षितापि बहुधा
भूरङ्गवङ्गादिका§ ।
तैरन्यैश्च पुराहृतापि वसतिं
तेष्वेव या नाकरोत्,
भोक्तुं यस्य च भाग्यमस्ति धरणी
तस्येति सत्यं वचः ॥ ७९ ॥

* इहैव—भारते इत्यर्थः । † Lord Clive

‡ Mir Jaffar (Nabab of Bengal, Behar and Orissa.)

§ अङ्गवङ्गादिका भूः—समग्रभारतभूरिति यावत् ।

प्राप्ता तां*मपरान्तदिक्कमलिनी-भूपाल-सीमन्तिनी
भाग्याद्वैः क्रमतो महामहिमतः श्रीमज्जयिन्यप्यसौ†।
या चास्यां निरतापि नाम यशसा संव्याप्य सर्व्वं जगत्
सा जीवत्यधुनापि गीतगरिमोद्गारैः प्रजानां मुखे॥८०॥

(युग्मकम्।)

विधोः कला गगनतले सदाऽमला
तडिल्लता घन-पुलिने तथाचला।
द्वयोरियं परिणतिरीश्वराद्यतः
स मे चिरं प्रभवतु मानसे ततः॥ ८१ ॥

इति श्रीश्रीश्वरीये विजयिनीकाव्ये
भारतवर्षवर्णनो नाम
द्वादशः सर्गः।

समाप्तमिदं महाकाव्यम्।

---

* तां—समग्रभारतभुवमित्यर्थः।
† जयिनी—विजयिनी, Queen Victoria.



# कवेः परिचयः ।

नग्नायकेशाऽखिलदेवतेशा
पदारविन्दे निपतन्महेशा ।
ललाटपट्टेन्दुकृतप्रवेशा
साऽपायतो रक्षतु नग्नवेशा ॥ १ ॥

वङ्गेतिनाम्ना प्रथितोऽस्ति देशः
यः सूक्ष्मधान्यादिधनैर्विशेषः ।
नीरैः समीरैः सरितां प्रतीरै-
स्तीर्थैरघं कृन्तति यश्च धीरैः ॥ २ ॥

उदग्दिशः सीमनि तत्र रंपुरं
स्वमूर्त्तिलेखाविलसत्सुरासुरम् ।
यदस्य शाखानगरं बृहद्गिर-
स्तथैव वङ्गस्य च गर्व्वितं शिरः ॥ ३ ॥

इटाकुमारीति जनप्रसिद्धा
भूरस्ति तत्रैव गुणेन विद्धा ।
इलाकुमारी-सरिदंशुकेन
विभूषिताङ्गीव सुशोभितेन ॥ ४ ॥

नैङ्गेव वर्व्वर्त्ति विलं फङिङ्गा
यदीक्षयाऽदूरगतास्ति शिङ्गा * ।
ताभिः पयोजैर्विलसन्मुखीभि† -
र्जागर्त्ति येयं तिसृभिः सखीभिः ॥ ५ ॥

---

* नैङ्गा-फङिङ्गा-शिङ्गेति शिखानां नामानि । † सापेक्षत्वेऽपि गमकत्वात् समासः ।

सा जन्मभूरस्य कवेरुदारा
स्वया श्रिया लङ्घितदेवदारा ।
या रंपुरे सत्कविरत्नसूति-
धीरैः सुतैश्चैव लसद्विभूतिः ॥ ६ ॥

भूमौ पूर्व्वं वरेन्द्रे समजनि भगवानाख्यया रामकृष्ण-
चूड़ारत्नं बुधानां दशदिशि शशिवद् यश्च देदीप्यमानः ।
भट्टाचार्य्यो य आर्य्यः प्रचुरतरतपाः पावने ब्रह्मवंशे
धीरा रुद्रेश्वराद्या जलनिधिसदृशा जज्ञिरे यस्य पुत्राः ॥ ७ ॥

कापाख्यः प्राक्कुलीनो गुणगणविभवैरेकएवाद्वितीयो
यस्योदीची-मुख-श्रीः शतरुचिरभवज्जन्मना कर्म्मणा च ।
येनाकार्य्यार्य्यशास्त्रेऽधिकरणजलधौ कौमुदी-चारुशोभा *
यां दृष्ट्वाद्यापि विद्वन्मनसि शशिसमे प्रादुरास्ते प्रसादः ॥ ८ ॥
(युग्मकम् ।)

यज्ज्येष्ठपुत्रो भुवि नाम रुद्रो
विद्या-समाधेः खलु यः समुद्रः ।
सङ्कीर्त्तयाम्यद्य तदीयवंशं
भूभारते पूतकथावतंसम् ॥ ९ ॥

ज्यायानभूद् भ्रातृचतुष्टयानां
यो रामकृष्णस्य सुतोऽनुजानाम् ।
रुद्रेश्वरो यस्य सुतः प्रसूतः
जीवेश्वरो नाम समाधिपूतः ॥ १० ॥

---

* 'अधिकरण-कौमुदी'ति रामकृष्णप्रणीतः स्मृति-ग्रन्थः ।

चितोश्वरोऽभूदमराधिपचित्
जीवेश्वराङ्कप्रभवाश्च यश्चित् ।
कविश्च काव्यस्य स तस्य पुत्रः
श्रीश्रीश्वराख्यो नवसंख्यसूनः ॥ ११ ॥

यङ्केऽत्र तेऽपीश्वरशब्दयुक्ताः
सर्व्वे सुधीराः कुयशोविमुक्ताः ।
व्याख्यानरङ्गेषु तथैव विप्राः
काव्य-प्रवाहेऽपि नदीव क्षिप्रा ॥ १२ ॥

उपाधिमन्तः खलु ते च सर्व्वे
पापे वसन्तो न च ये सु-खर्व्वे ।
सभां जयन्तो यशसा लसन्तः
विरेजिरे ब्रह्मसमाधिमन्तः ॥ १३ ॥

गताधियोगास्तु समाधिलग्ना-
बभुश्च ये हट्टपथेऽपि मग्नाः ।
कालेन गावोऽपि भवन्त्यहम्बा*
वाक्या न संसार-सुखे स-दग्धाः ॥ १४ ॥

अभूत्समाधिः सहसा सुपात्रे
ज्वरोद्गमो यद्वदिहच्चंगात्रे ।
भवोऽपि चक्रे न च यस्य हानीः
खगात्समाधिः खगतोऽन्यवाणी ॥ १५ ॥

---

* 'हम्बेति'—गवां कण्ठध्वनिः । अहम्बाः—हम्बेति-रवविहीनाः इति यावत् ।

येषां स्वनामेश्वरशब्दयुक्तं
चरित्रमप्यस्ति कुसङ्गमुक्तम् ।
निपीय तत् सत्यवचाभिरामं
वात्स्येत्ययं को बुबुधे न कामम् ? ॥ १६ ॥

इटाकुमारी-प्रभवास्त ईश्वरा-
द्युसत्वरा वा भवभूमिसत्वराः ।
भवेन्न केषामपि चित्त-हर्षता
सताञ्च तेषां प्रियसन्निकर्षता ? ॥ १७ ॥

मग्ना सन्देहचक्रे च्युति-तति-पतिता स्वागतं प्रार्थयन्ती
गात्रोत्थानं बुधेभ्यो रचयति परिषद्भक्तिनम्राथ येभ्यः ।
पोष्टारम्भाननकानामिव कुलपतयो ये स्ववश्यातमूल्या-
स्तानेतान् केऽपि वीक्ष्य क्वचन न च जना विस्मिताः सम्बभूवुः ? ॥ १८

---

इत्थेतेऽस्य कवेर्यशःप्रथधरौ सर्वेश्वरानुग्रहात्
गोपालेश्वर-कोकिलेश्वरतया ख्यातावुभावङ्गजौ ।
सुभ्रातोरनयोस्तयोरनुजनस्यैवं श्रियाभीप्सितौ
ब्रह्म-ध्यान-समाख्यया सुतवृषौ स्तः, सन्तु सर्वेऽप्यमी ॥ १९ ॥

